# शैवरामायणम्

## पुरोवाक्

**यावत् स्थास्यन्ति गिरयः सरितश्च महीतले।**
**तावद् रामायणी कथा लोकेषु प्रचरिष्यति॥**

अकुण्ठश्रद्धायुतानां भारतीयानां कृते वैकुण्ठेश्वरः रामाख्यो जगदीश्वरः प्राणभूतोऽस्ति। रामपरकाः ग्रन्थाः भारतीयायाः अस्मितायाः बोधकाः सांस्कृतिकाः साहित्यिकाश्च निधयः, राष्ट्रियाः, शाश्वतमानवीयमूल्यानाञ्चोत्कृष्टाः कोषाः सन्ति। रामचरितस्य प्रभावो न केवलं साहित्येऽपितु लोकेऽपि दृश्यते। लोकगीतेषु लोकमञ्चनेषु शिल्पेषु चित्रेषु च रामचरितमनुस्यूतमस्ति। एवं रामः भारतीयसंस्कृत्याः प्रतिनिधिरस्ति। वैदेशिकानां संस्कृतिरपि रामचरितादस्पृष्टा नास्ति।

शैवरामायणामिधाना प्रकृता मातृका रामसाहित्यस्य शृङ्खला वर्तते। सम्पूर्णा कथा शिवपार्वतीसंवादेन वर्णितास्ति। रामविजयप्रसङ्गायौत्सुक्ययुतां शिवां शिवः रामेण कृतं सहस्त्रकण्ठवधं श्रावयति।

ग्रन्थारम्भे ग्रन्थान्ते च[१] शिवः इमां कथां रामविजयामिधानेन कथयति, किन्तु ग्रन्थान्ते, रामविजयाख्या कथा शिवप्रोक्तत्वात् शैवरामायणनाम्ना विश्रुता भविष्यति, इदमपि वर्णितमस्ति। मातृकायां कुत्रापि कस्यापि ऋषिजनस्य व्यासस्य वा उल्लेखो नास्ति। द्वादशाध्यायुता शैवरामायणस्य कथा एवमस्ति—

---

१. शैवरामायण, १/६, तत्रैव, १२/३१।

# कथासारः

**प्रथमोऽध्यायः**

एकदा कैलासशिखरे रत्नसन्नद्धपीठे समासीनः पार्वत्या पृष्टः शङ्करः तां रामविजयाख्यं सहस्रकण्ठासुरविनाशनं वर्णितवान्।

रावणवधानन्तरमयोध्यां सम्प्रातः पट्टाभिषिक्तः श्रीरामः सम्यगयोध्यामपालयत्। कालान्तरं सः भ्रातृभिः सहितोऽश्वमेधं प्रारब्धवान्। रामाज्ञया भरतशत्रुघ्नौ सेनया सह मेध्याश्वमन्वचरताम्। अश्वस्य ललाटे सौवर्णपट्टलिखितं राघवीयकं पत्रमासीत्। पत्रं दृष्ट्वा राजानः रामाज्ञानुसारं यथाशक्तिं करं दत्तवन्तः।

**द्वितीयोऽध्यायः**

भरतः यज्ञीयाश्वेन सह शुद्धपाथोधितीरं प्राप्य तत्रैव ससैन्यः विश्रमं कृतवान्। सिन्धुनावेष्टिते पुष्करद्वीपे चित्रवती पुरी आसीत्। तत्र दितिकश्यपयोर्बली सुतः सहस्रकण्ठः शास्ति स्म। सोऽमात्येन रक्ताक्षेण सह परिभ्रमन् सिन्धुतीरे मेध्याश्वेन सह ससैन्यं भरतं दृष्ट्वाश्वापहरणस्य निश्चयमकरोत्। रात्रिवेलायां रक्ताक्षः स्वललाटे तिलकं कृत्वा सबले भरते मत्तचूर्णं विकीर्य मायया मोहयन् मेध्याश्वं गृहीत्वा स्वपुरीं प्रत्यागतवान्। प्रभातकालेऽश्वादर्शनाद् भरतो व्याकुलो सञ्जातः। सेनया सह सः सर्वत्र मेध्याश्वस्यान्वेषणं कृतवान्। अन्ततो भरतः किञ्चिद् विचार्य लेखं शरससन्धानेनेन्द्रं प्रेषितवान्। भरतस्य लेखं प्राप्य इन्द्रो देवगुरुणा सह तत्रागत्य अश्वाहरणे आत्मनः अज्ञानं प्रादर्शयत्। बृहस्पतिः सहस्रकण्ठेनाश्वहरणस्य वृत्तान्तमुक्त्वा भरतं मेध्याश्वप्राप्तये रामसहस्रकण्ठयोर्युद्धं परामृष्टवान्।

**तृतीयोऽध्यायः**

भरतोक्तमश्वहरणं निशम्य श्रीरामः अन्यैः विभीषणादिनरेशैः अमात्यैः ऋषिभिश्च सह परामृष्टवान्। ऋषिः जाबालिः रामं सहस्रकण्ठस्य पूर्वजन्मचरित-मुक्तवान्—कश्यपसुतः सहस्रकण्ठः राक्षसः उग्रतपसा सुरेभ्यः प्राप्तवरः त्रिलोकं विजित्य

मोक्षाय तपः कृतवान्। तस्य तपसा तुष्टो विष्णुः तमुक्तवान् यदहं मानुषावतारे त्वां रणे हत्वा शेषत्वं प्रदास्यामि, त्वं मदीयं शयनं भूत्वा मदीयं स्थानमेष्यसि। सोऽयं लब्धवरः सहस्रकण्ठोऽश्वमपहृत्य पुष्करद्वीपे तिष्ठति। भवान् तत्र ससैन्यः गत्वा रणे तं विजित्य पुनः तुरगं गृहीत्वा क्रतुं सम्पादयतु। सोऽपि सहस्रकण्ठः भवदीयवचनानुसारं मुक्तिं प्राप्य सहस्रफणः शेषः भूत्वा भवतः शय्या भविष्यति।

**चतुर्थोऽध्यायः**

जाबालेः परामर्शानुसारं रामो भ्रातृभिः सुग्रीवादिवानरैः सबलेन विभीषणेन स्वसैन्येन सह पुष्पकमधिरुह्य चित्रवतीं पुरीं प्राप्तवान्। पुरी समुद्रेण प्राकारैश्च सुरक्षिता दुर्गमा चासीत्। हनुमान् चित्रवर्णको शुको भूत्वा सहस्रकण्ठस्य सभायां प्रविष्टो जातः। विचित्रं शुकं विलोक्य सर्वे सभासदः समुत्सुकाः जाताः। अमात्यः रक्ताक्षः शुकं, आगमनस्य स्थानं प्रयोजनं प्रेषकस्य परिचयं च पृष्टवान्। प्रयोजनं ब्रुवन् हनुमान् सहस्रकण्ठमश्वस्य प्रत्यावर्तनायापि परामृष्टवान् अन्यथा रणे रामेण तस्य मृत्युरवश्यम्भावी वर्तते इत्यपि उक्तवान्।

**पञ्चमोऽध्यायः**

सहस्रकण्ठः हयप्रत्यावर्तनमस्वीकुर्वन् राक्षसान् शुकग्रहणायादिष्टवान्। इदमाकर्ण्य हनुमान् शुकरूपं परित्यज्य वानररूपेण सहस्रकण्ठोपरि न्यपतत्। तस्य किरीटादीनि विकीर्य स्तम्भमेकमुत्पाट्य हनुमान् सहस्रकण्ठं ताडितवान्। राक्षसाः अपि हनुमतं प्रहृतवन्तः किन्तु हनुमान् तान् बालेन प्रताड्य रामं सम्प्राप्तः।

तदनन्तरं रामेण प्रेषिताः वानराः सहस्रकण्ठस्य राक्षसैस्सह तुमुलं युद्धवन्तः। युद्धेऽस्मिन् सहस्रकण्ठस्य प्रमुखाः वीराः वीरगतिं सम्प्राप्ताः। हतशेषाः सहस्रकण्ठं युद्धवृत्तान्तं न्यवेदयन्।

**षष्ठोऽध्यायः**

ततः सहस्रकण्ठः ससैन्यः रणे सम्प्राप्तो जातः। युद्धे समुपस्थितान् वानरान् गृहीत्वा सः तान् मुखस्थान् कृतवान्। ते मुखस्थाः वानराः सहस्रकण्ठस्य नासिकाकर्णयोः रन्ध्रेभ्यः निसृत्य रामं प्रत्यागतवन्तः। समरं द्रष्टुं देवदैत्यादयो ब्रह्मर्षयो महर्षयश्च विमानमारुह्यऽन्तरिक्षे आगताः। तान् विलोक्य क्रोधाविष्टो सहस्रकण्ठो दैत्यदेवादीन् गृहीत्वा भूमौ निक्षिप्तवान्। ब्रह्मर्षयो महर्षयश्च तस्य कृते तेजसः प्रभावात् दुष्प्राप्याः आसन्। ते सहस्रकण्ठं रामेण पूर्वकृतानां राक्षसविनाशानां कथाः अश्रावयन्, तञ्च मेध्याश्वं रामं प्रत्यर्पणाय परामृष्टवन्तः किन्तु सहस्रकण्ठः परामर्शं न स्वीकृतवान्।

**सप्तमोऽध्यायः**

सहस्रकण्ठः युद्धाय रामसैन्यमाहूतवान्, युद्धे समुपस्थितान् वानरसैनिकांश्च भक्षितवान्। स्वसैन्यं भक्षितं श्रुत्वा रामः सुग्रीवविभीषणादिप्रमुखान् पुष्पके आरोप्य सहस्रकण्ठैः सह व्योमयुद्धमकरोत्। विभीषणसहस्रकण्ठयोर्युद्धे, विभीषणोऽचेतो भूत्वा भूमावपतत्। तदनन्तरं भरतादीनां सहस्रकण्ठैः सह युद्धोऽभवत्। रामस्य सेना मूर्च्छिता जाता।

**अष्टमोऽध्यायः**

ततः रामसहस्रकण्ठौ रणक्षेत्रे समुपस्थितवन्तौ। सहस्रकण्ठः रामं राक्षससंहारस्य पूर्वप्रसङ्गान् स्मारयन् आत्मनः गौरवं स्थापितवान्। रामः तं मुधाकथनापेक्षया युद्धायाहूतवान्। तयोः प्रथमतः शस्त्रास्त्रयुद्धः पश्चात् द्वन्द्वयुद्धश्चाभवत्।

**नवमोऽध्यायः**

रामसहस्रकण्ठयोः घोरयुद्धो जातः। अन्ततः श्रीरामः सहस्रकण्ठं नारायणास्त्रेण हतवान्। सहस्रकण्ठश्च मुक्तो भूत्वा सहस्रफणवता शेषरूपेण विष्णुशय्या अभवत्। देवादिकाः प्रसन्नाः जाताः। इन्द्रः रामस्योपरि पुष्पवृष्टिं तस्य सेनायाञ्चामृतवृष्टिं कृत्वा रामस्य सैनिकान् पुनरुज्जीवितान् कृतवान्।

**दशमोऽध्यायः**

गतप्राणं सहस्रकण्ठं विलोक्य राक्षसाः दैन्यमवाप्नुवन्। सहस्रकण्ठसूनुः पुष्कराक्षः किंकर्तव्यविमूढतां प्राप्य विभीषणस्य शरणं गतवान्। विभीषणः तेन सह रामं प्राप्तवान्। रामश्च शरणागतं पुष्कराक्षं गतभयं कृत्वा पितुः मृतकसंस्कारार्थमादिष्टवान्। संस्कारानन्तरं पुष्कराक्षस्य राज्याभिषेको जातः। पुष्कराक्षः रामं तुरगमानीय सादरं प्रत्यर्पितवान्।

**एकादशोऽध्यायः**

ब्रह्मा रामं परब्रह्म इव स्तुत्य दैवैस्सह स्वर्गं प्रस्थितवान्। पुष्कराक्षः रामं सम्पूज्य रत्नसिंहासनं समुपायनीकृतवान्। रामः स्वजनैः सह पुष्पके आरुह्यायोध्यां प्रस्थितवान्।

**द्वादशोऽध्यायः**

अयोध्यां सम्प्राप्तो रामः सीतया स्वभ्रातृभिः सह सरयूतटे यज्ञशालाः, शालासु यज्ञवेद्यश्च निर्माय्य यज्ञं सम्पादितवान्। यज्ञेऽभ्यागतानां स्वागते विभिन्नानि पेयानि

पक्वान्नानि च प्रस्तुतानि आसन्। प्रस्थानकाले रामः सर्वेषां यथार्हमर्हणं कृतवान् पुरोहितान् च प्रभूतदक्षिणाः दत्तवान्। एवं रामः शतानश्वमेधान् सम्पादितवान्। शतमेऽश्वमेधे सः वाल्मीकेराश्रमं प्रति सीतां परित्यक्तवान्। सीतायाश्च सुवर्णप्रतिमां संस्थाप्य यज्ञं कृतवान्। ततः वर्षसहस्रं पृथिवीं पालयन् पुत्रौ कुशलवौ अभिषिच्यायोध्यायां रामः दिवं प्रस्थितवान्। रामस्य पुरतः सीता धरातलं प्रविष्टा जाता। वैकुण्ठं समासाद्य सीतारामयोः मेलनं रमारूपे विष्णुरूपे चाभवत्।

## कथानकस्योपजीव्यविचारः

न किमपि सर्जनं परम्परारहितं भवति। परम्परा एव विभिन्नविधासु पुष्पिता पल्लविता च भवति। शैवरामायणस्यापि कथा पारम्परीणे रामसाहित्ये समाश्रितास्ति। कथया सह लोकपरम्परापि संवलिता दृश्यते। प्रायः वीरत्वपूर्णकृत्येभ्यः लोकविश्रुतान् वीरान् परितः विविधाः मिथकाः अनुस्यूताः भवन्ति। इमाः कथाः परम्परयानुप्राणिताः भवन्त्येव, ताभिश्च सहान्याः काल्पनिकाः घटनाः अपि सम्मिश्रिताः भवन्ति। एवं शैवरामायणेऽपि दृश्यते। रामसहस्रकण्ठयोर्युद्धः अद्भुतरामायणेऽसमदेशीये कतिपये साहित्ये च प्राप्यते। शैवेऽयं संङ्ग्रामः रूपान्तरेण वर्णितोऽस्ति।

## अद्भुतरामायणे रामसहस्रकण्ठकथा

कथेयमद्भुते रामायणे सप्तदशसर्गतः सप्तविंशतिसर्गपर्यन्तं वर्णितास्ति। सहस्रकण्ठः विश्रवणः कैकस्याश्च तनयः, दशाननस्य च सहोदरः आसीत्। उभौ रावणाभिधानावास्ताम्। एकदा विश्वामित्रः दशाननवधप्रसङ्गे रामं प्रशंसितवान्। सीता विहस्य सहस्रकण्ठसंज्ञकस्यापररावणस्य कथां श्रावयति स्म। पुष्करद्वीपनिवासी सहस्रकण्ठः रावणः इन्द्रादिदेवान् कारागारे कृतवान्। सहस्रकण्ठस्य वृत्तान्तं निशम्य रामः सीतया स्वबलेन च सह पुष्करं सम्प्राप्तवान्। सहस्रकण्ठः रामस्य सेनां वायव्यैः शरैः अयोध्यां प्रक्षिप्तवान्, द्वन्द्वयुद्धे च रामं हतवान्। गतप्राणं रामं विलोक्य सीता भयङ्कररूपेण सहस्रस्कन्धं तस्यानुगतान् च हत्वा विकटं नृत्यति स्म। तस्याः विकटनर्तनेन सम्पूर्णा सृष्टिः सङ्कटापन्ना जाता।[२] ब्रह्मादिदेवाः तां विरमितुं प्रार्थितवन्तः किन्तु कर्णं न दत्तवती सा तथैव नृत्यती आसीत्। अन्ततः देवाः रामं पुनरुज्जीवितं कृतवन्तः परमां शक्तिं सीताञ्च स्तुतवन्तः। ततः सीता शान्ता जाता। सीतारामौ अयोध्यां प्रत्यागतवन्तौ।

---

२. 'ननर्त जानकी देवी घोरकाली महाबला।' (अद्भुतरामायण, २३/६३)

## अद्भुतशैवयोः साम्यम्

१. रामायणयोः कथारम्भो दशानने मृते जाते भवति।

२. उभयोः कथानकयोः पुष्करद्वीपे सहस्रकण्ठः शास्ति स्म।

## वैषम्यम्

१. शैवे सहस्रकण्ठः दितिकश्यपयोस्सुतः, अद्भुतेऽयं कैकसीविश्रवणोः जातः वर्णितोऽस्ति।

२. अद्भुतेऽयं रावणाभिधानकः, शैवे केवलं राक्षस एवं शंसितोऽस्ति।

३. अद्भुते रामस्य हन्ता सहस्रकण्ठः शैवे सहस्रकण्ठस्य हन्ता रामः उक्तः।

४. अद्भुते सीता घोरकाली शक्तिरूपा सहस्रकण्ठस्य च हन्त्री वर्तते। शैवरामायणे सीता रामस्य सहधर्मिणी पत्नी एवास्ति।

५. अद्भुते युद्धप्रयोजनं रामेण राक्षसानां विनाशोऽस्ति, शैवे तयोर्विग्रहनिमित्तं सहस्रकण्ठेन मेध्याश्वस्यापहरणमस्ति।

एवं शैवरामायणे कथायाः पात्राणि अद्भुतरामायणाद् गृहीतानि सन्ति किन्तु तयोः कथावैभिन्र्यं वर्तते।

## विलङ्कारामायणे रामसहस्रकण्ठयोस्समरः

उत्कलदेशीये विलङ्कारामायणे पूर्वखण्डे रामसहस्रकण्ठयुद्धो वर्णितः।[३] दशाननवधानन्तरमभिषिक्ते जाते च बिभीषणे रामः विलङ्काधिपं सहस्रस्कन्धं सन्धिं प्रस्तौति स्म किन्तु सहस्रस्कन्धः तत्प्रस्तावमस्वीकरोत्। फलतः युद्धो जातः तस्य शक्तिप्रहारेण तौ मूर्च्छितौ जातौ। ततः सीता मनोहररूपं धारयती पुष्पधनुषि पञ्चकामशरान् सन्धाय काममोहितं सहस्रस्कन्धं हतवती।

पात्रान् विहाय इयमपि कथा शैवरामायणात् पृथगस्ति। सहस्रस्कन्धवधः सहस्रमुखरावणचरिते[४] जगतरामरायेण कृतेऽद्भुते रामायणे रामश्वेरकृतेऽद्भुते रामायणे, अद्भुताचार्येण कृते आश्चर्ये अद्भुताश्चर्ये वा रामायणे[५] विश्वम्भरकृते सहस्रस्कन्धवधे

---

३. कामिल बुल्के—रामकथा, पृ० ६२३।

४. कामिल बुल्के, तत्रैव, पृ० १७६।

५. तत्रैव, पृ० २३७।

च वर्णितोऽस्ति। सहस्रस्कन्धवधे सहस्रकण्ठः विष्णुभक्तो वर्णितः। शैवेऽपि सहस्रकण्ठः विष्णुभक्तः शंसितोऽस्ति।

### नागाक्षयुद्धः

असमदेशीये भवदेवविप्रकृते नागाक्षयुद्धे शैवरामायणे च कथासाम्यं किञ्चित् प्रतीयते। नागाक्षयुद्धेऽपि कथा शिवशिवासंवादेन प्रस्तुतास्ति। सीतानिर्वासनान्तरं कथा प्रारभ्यते। रावणादिब्रह्मराक्षसानां वधजातात् पापान्मोक्षार्थं रामोऽश्वमेधमनुष्ठितवान्। यज्ञार्होऽश्व पारे समुद्रं सिन्धुरानगरे आसीत्। तत्र नागाक्षो शास्ति स्म। रामः हनुमल्लक्ष्मणौ अश्वार्थं नागाक्षस्य समीपं प्रेषितवान्। नागाक्षस्य अस्वीकृतिमाकर्ण्य नागाक्षहनुमतोर्युद्धो जातः। युद्धे नागाक्षस्य गौरवं दृष्टवा हनुमान् तस्य पुर्याः समुद्रे निमज्जनायोद्यतोऽभवत्। नगररक्षणाय नागाक्षोऽश्वप्रदानाय तत्परोऽभवत्। किन्तु रामदर्शनस्याग्रहं कृतवान्। हनुमल्लक्ष्मणौ तमयोध्यां नीतवन्तौ। नागाक्षः रामस्य दर्शनं कृत्वा तं मेध्याश्वं प्रत्यर्पितवान्। एवं रामस्याश्वमेधः सम्पन्नो जातः।

इयं कथा[६] शैवरामायणीयया कथया सह सादृश्यं बिभर्ति। शैवेऽपि कथा शिवपार्वतीसंवादेन प्रस्तुतास्ति। प्रतिनायकोऽसुरः सामुद्रस्य देशस्य शासकोऽस्ति। मेध्याश्वस्य प्राप्तिनिमित्तं रामराक्षसयोर्युद्धः सञ्जातः। उभौ राक्षसौ रामभक्तौ (विष्णुभक्तौ) वर्णितौ। कथा रामविजये पर्यवसिता जाता।

अत्र निश्चेतुं काठिन्यमस्ति, का कथा कया प्रभाविता जाता। उभयोः कथानकयोः साम्यं सांयोगिकं भवेत्।

## शैवरामायणे वाल्मीकेः प्रभावः

शैवरामायणे कतिपयप्रसङ्गेषु वाल्मीकिरामायणस्य प्रभावो परिलक्ष्यते। ते प्रसङ्गाः अधोवर्णिताः सन्ति।

### सुरसाप्रसङ्गः

वाल्मीकिरामायणे सुन्दरकाण्डे देवैः प्रेषिता नागमाता सुरसा हनुमतः विवेकपरीक्षार्थं तं भक्षितुमुद्यतासीत्। हनुमान् तामादरयन् अतिलघुरूपेण तस्याः मुखे प्रविश्य तत्क्षणं बहिर्भूत्वा तां प्रणमत।[७]

---

६. कृष्णनारायण प्रसाद मागध, असमप्रान्तीय राम साहित्य, पृ० २७७/२७८।

७. वाल्मीकिरामायण, सुन्दर०, १/१४४-१७९।

शैवरामायणे रणे सम्प्राप्तः सहस्रकण्ठः रामस्य वानरान् भक्षितवान्। ते वानराः तस्य नासिकाकर्णयोः रन्ध्रेभ्यः बहिरागत्य रामं सम्प्राप्तवन्तः।[८]

## रावणीया सभा

रामदूतो हनुमान् रावणपुत्रेण रावणसभायां प्रस्तुतोऽक्रियत। रावणः अमात्यान् हनुमतः परिचयमागमनप्रयोजनञ्च प्रष्टुमादिष्टवान्।[९] हनुमतः परिचयमागमनप्रयोजनं[१०] सीतायाः प्रत्यावर्तनस्य परामर्शञ्च निशम्य रावणः स्वानुचरान् तं हन्तुमादिष्टवान्।[११] विभीषणः बुद्धिकौशलेन रावणं निवारितवान् तथापि हनुमतः पुच्छः प्रज्वालितो जातः। हनुमान् संदहता लाङ्गूलेन राक्षसान् ताडितवान्,[१२] लङ्काञ्च दग्धवान्।

शैवरामायणे हनुमान् शुकं भूत्वा रामस्य दौत्यमुद्वहन् सहस्रकण्ठस्य सभाया-मुपस्थितो जातः। रक्ताक्षेणामात्येन दृष्टः पृष्टश्च हनुमान् तमात्मनः परिचयमागमन-कारणञ्चोक्तवान्। सहस्रकण्ठः स्वानुचरान् तं ग्रहीतुमादिष्टवान् किन्तु हनुमान् तस्योपरि न्यपतत्, तस्य किरीटादीनि भूमौ न्यक्षिपत्, तस्यानुचरान् च लाङ्गूलेनाताडयत्।[१३]

## शुकसारणप्रसङ्गः

रावणः रामस्य बलं ज्ञातुं गुप्तचरौ शुकसारणौ पक्षिरूपिणौ[१४] सम्प्रेषितवान्। अमू वानरौ भूत्वा रामबले प्रविष्टौ जातौ।[१५] किन्तु विभीषणः तावभिज्ञातवान्।

शैवे हनुमान् शुको भूत्वा सहस्रकण्ठस्य सभायां प्रविष्टोऽभवत्[१६]। स्यात्, प्रसङ्गेऽस्मिन् वाल्मीकिरामायणस्य प्रभावो भवेत्। तत्र शुकसारणौ खगरूपं विहाय वानररूपेण शत्रुमध्ये गतवन्तौ, शैवे हनुमान् वानररूपं परित्यज्य पक्षिरूपेण शत्रुमध्ये गतवान्।

---

८. शैवरामायण, ६/५-६।
९. वाल्मीकिरामायण, सुन्दर० ४८/६०-६१।
१०. तत्रैव, ५०/१८-१९।
११. तत्रैव, ५२/१।
१२. तत्रैव, ५३/८।
१३. शैव०, ५।
१४. वाल्मीकिरामायण, युद्ध०, २५/२५-२८।
१५. तत्रैव, २५/९।
१६. शैव०, ४/७, ८, १०।

**मृत्योरनन्तरं शत्रुतासमाप्तिः**

वाल्मीकिरामायणे प्रसङ्गद्वये बालिवधे रावणवधे च श्रीरामः वैरिणः मृत्योरनन्तरं तं प्रति शत्रुभावं परित्यज्य तस्य मरणस्यादरं करोति स्म। बालिवधानन्तरं तस्य पत्नीं पुत्रञ्च समाश्वास्य मृतस्य संस्कारार्थमादिष्टवान्।[१७] एवं रावणप्रसङ्गेऽपि दृश्यते।[१८]

शैवे सहस्रकण्ठस्य मृत्योः पश्चात् रामः तस्य पुत्रं समाश्वास्य मृतकं संस्कर्तुमादिष्टवान्।[१९] रामाज्ञया भरतः सहस्रकण्ठस्य दुःखितं स्त्रीजनं समाश्वस्तवान्।[२०]

**वैरिवधानन्तरं तस्य सन्ततिं प्रति वात्सल्यम्**

वाल्मीकिरामायणे आसन्नमृत्युः बालिः स्वतनयमङ्गदं रामस्य शरणे कृतवान्।[२१] रामः शरणागतमङ्गदं सहर्षं स्वीकृतवान्।

शैवे भीत सहस्रकण्ठसुतः पुष्कराक्षो विभीषणपरामर्शेन रामस्य शरणागतोऽभवत्। रामः शरण्यं पुष्कराक्षमभयं दत्तवान्।[२२]

एवं शैवरामायणे वाल्मीकिरामायणस्य प्रभावो बाहुल्येन दृश्यते।

## भरतस्येन्द्रविषयिणी आशङ्का

अपहृते जाते मेध्याश्वे इन्द्रं प्रति सन्देहं भरतो व्यनक्ति स्म। इन्द्राय पत्रप्रेषणे भरतस्यायमेवाशयो प्रतीयते।[२३] प्रसङ्गोऽयं पुराणप्रभावितोऽस्ति। इन्द्रो यज्ञे विघ्नमुत्पादयितुं पृथोः[२४] सगरस्य[२५] दिलीपस्य[२६] च मेध्याश्वमपहृतवान्। अतः प्रसङ्गेऽस्मिन् भरतस्य इन्द्रे सन्देहः स्वाभाविकोऽस्ति।

---

१७. वाल्मीकिरामायण, किष्किन्धा०, २५/१३।
१८. तत्रैव, युद्ध० १०९/९२।
१९. शैव०, १०/११।
२०. तत्रैव, १०/२०।
२१. वाल्मीकिरामायण, २२/१५।
२२. शैव०, १०/१०।
२३. तत्रैव, २/११-१२।
२४. भागवतपुराण, ४/१९।
२५. ब्रह्मपुराण, ७८।

## शैवरामायणस्य कथावैशिष्ट्यम्

शैवरामायणस्य प्रतिपाद्योऽस्ति सहस्रकण्ठे रामविजयः। इदमाख्यानं विविधे रामसाहित्ये दृष्टिपथमायाति। शैवरामायणी कथा सर्वासु रामकथासु विशिष्टा वैविध्ययुता चास्ति। अस्याः कथा अन्यत्र न दृश्यते।

रामायणस्यास्य प्रथमं वैशिष्ट्यं रामसहस्रकण्ठयोर्विग्रहस्य निमित्तमस्ति। कस्यामपि रामकथायां सहस्रकण्ठेन मेध्याश्वस्यापहरणं निमित्तरूपेण वर्णितं नास्ति, अपितु रामः प्रभुत्वस्थापनाय सहस्रकण्ठेन सह युद्धमकरोत्। शैवे तयोः युद्ध-निमित्तमश्वापहरणं शंसितम्। इदमधिकयुक्तियुतं कारणमस्ति।

शैवरामायणस्यापरं वैशिष्ट्यं सहस्रकण्ठस्याहन्तुर्विषये वर्तते। प्रायेण सहस्रकण्ठवधः सीतया वर्णितोऽस्ति। शैवे सहस्रकण्ठो रामेण हतो वर्णितः। अत्रेदमाख्यानं 'रामविजयः' इति प्रोक्तमन्यत्र सहस्रकण्ठविनाशनं सीतायाः विजयकथा वर्तते। सम्भवतः तेषु आख्यानेषु स्त्रीविग्रहं दिव्यशक्त्याः अधिष्ठानं कृत्वा शक्तिरूपिण्या सीतया सहस्रकण्ठवधो वर्णितोऽस्ति।

सहस्रकण्ठस्य मृत्योरनन्तरं सहस्रफणयुते शेषे परिणतिः, तस्य विष्णोः शयनभवनं शैवरामायणस्यापरं वैशिष्ट्यमस्ति। कथेयमन्यत्र नास्ति अपितु शैवरामायणस्योद्भावनास्ति। परम्परानुसारं लक्ष्मणः शेषावतारोऽस्ति।[२७] शेषस्य कस्यापि असुरेण सह सम्बन्धो नास्ति। पुनश्च शेषोऽनन्तनामा, विष्णुशयनरूपेणास्य सत्ता सृष्टेः प्रागपि आसीत्। विष्णोः रामावतारः त्रेतायुगे जातः। रामस्य वीरत्वपूर्णकृत्येन विष्णुः शय्यायुतो जातः, इदं युक्तियुतं न प्रतीयते। स्यात् शेषस्योद्भवप्रसङ्गे कस्य स्थानविशेषस्येयं लोककथा भवेत्।[२८] प्रसङ्गेऽस्मिन् राक्षसस्य सहस्रग्रीवता शेषस्य सहस्रफणत्वमवधेयमस्ति। अत्र मुखेषु संख्यासादृश्यं ध्यानमाकर्षति।

यथा सहस्रकण्ठस्य शेषत्वं तथैव हनुमतः चित्राङ्गशुकत्वं शैवरामायणस्य मौलिकाभिव्यक्तिरस्ति। अन्यत्र कुत्रापि हनुमतः शुकरूपेण दौत्यं न दृश्यते। खगानां दौत्यं परवर्तिसाहित्येषु, यथा नैषधीयचरिते हंसस्य दौत्यं, हिन्दीभाषायां जायसीकृते पद्मावते हीरामनशुकस्य दौत्यं प्राप्यते। लोककथास्वपि विहगदौत्यं श्रूयते।

शैवरामायणमन्यरामायणापेक्षया पश्चवर्ती प्रतीयते। एतत्पूर्वं वाल्मीकिरामायणं, वसिष्ठरामायणम् (योगवासिष्ठम्), अगस्त्यप्रोक्तं रामायणमद्भुतरामायणञ्च विश्रुतानि

---

२६. पद्मपुराण, उत्तरखंड, २०/१२-४२, रघुवंश, ३/३-६७।

२७. द्विपदरामायण (तेलुगु), ६/१११-११३, कामिलबुल्केनोद्धृतम्, पृ० ५७३।

२८. मतमिदं—विद्यापीठस्य प्राचार्येभ्यः सम्प्राप्तमस्ति।

आसन्।[२९] इयं रामायणी कथा शैवरामायणमिति सम्बोधनात्पूर्वं रामविजयनाम्ना विश्रुतासीत्।[३०]

रामविजयाख्याने रामस्य सहस्रकण्ठे विजयोवर्णितः। अस्मात्पूर्वं रामकथासु सहस्रकण्ठे सीताविजयः प्रोक्तः आसीत्, तत्र रामस्य सहस्रकण्ठेन पराभवो वर्णितः इदं प्रतीयते, एकेन राक्षसेन, भवतु सः अतीवबलवानं सहस्रकण्ठयुतः, देवावतारस्य लोकोत्तरचरितस्य रामस्य पराभवचिन्तनमपि लोकेऽग्राह्यमासीत्। अतः शैवे रामसहस्रकण्ठयोर्युद्धः एवं वर्णितो जातः येन रामस्य दिव्यता, पूजनीयता प्रतिष्ठा च सुरक्षिता भवेत्, अपरञ्च रामावतारस्य लक्ष्यं राक्षसविनाशोऽपि पूर्णतामवाप्नुयात्। एवं राक्षसीषु शक्तिषु दिव्यशक्तीनां विजयः शैवरामायणस्य प्रमुखप्रतिपाद्योऽस्ति।

शैवरामायणस्यारम्भः उपसंहृतिश्च अश्वमेधेन सम्पद्यते। ग्रन्थोऽयमश्वमेधयज्ञस्य पूर्णाहुत्या पूर्णतां प्राप्नोति। रामस्याश्वमेधः विविधग्रन्थेषु वर्णितोऽस्ति[३१] किन्तु कथानकसदृशः अस्य यज्ञीयप्रकरणमपि अन्येभ्यो भिन्नमस्ति। शैवरामायणानुसारं रामः शताश्वमेधमनुष्ठितवान्। तेषु नवतिनवयज्ञेषु सीता स्वयमेवोपस्थितासीत् शतमेऽश्वमेधे रामः सीतां वाल्मीकेराश्रमं प्रति परित्यक्तवान्, तस्याः स्थाने च सुवर्णप्रतिकृतिं कृत्वा यज्ञं सम्पादितवान्।[३२] प्रायः सर्वत्र सीतापरित्यागोऽश्वमेधात् पूर्वमेव वर्णितोऽस्ति। शैवानुसारं शतमेश्वमेधेऽर्थात् वनवासात् सीतारामयोः अयोध्याप्रत्यावर्तनस्य दीर्घकालानन्तरं सीतापरित्यागः तर्कसङ्गतः न प्रतीयते। स्यात्, ग्रन्थकर्ता परम्परानिर्वहणाय एव सीतापरित्यागं वर्णितवान्।

रामाश्वमेधानां शतसंख्या आनन्दरामायणानन्तरं शैवरामायणे एव दृश्यते। वाल्मीकिरामायणे दशाश्वमेधानां वर्णनमस्ति।[३३]

एवं वर्षसहस्रमयोध्यां पालयन् रामो लवकुशावभिषिच्य भ्रातृभिः पुरवासिभिश्च वैकुण्ठं प्रस्थितवान्। सीता तस्य पुरतः एव धरातलं प्रविश्य वैकुण्ठं प्राप्तवती। वैकुण्ठे तयोः सम्मेलेन सह शैवरामायणस्य सुखान्ता परिणतिर्भवति।

---

२९. शैव०, ६/१६-१९

३०. तत्रैव, १/५, १२/३३।

३१. वाल्मीकि०, उत्तर०, ३७-४०; आनन्दरामा०, यागकाण्ड; अध्यात्मरामा०, उत्तर० ६-७ सर्ग; अग्निपुराण, १०/३३; पद्मपुराण, पातालखण्ड; रामाश्वमेधीयम्, जैमिनीयाश्वमेध ३९ आदि।

३२. शैव०, १२/२५-२६।

३३. आनन्दरामा०, जन्मकाण्ड, ४; वाल्मीकिरामा०, युद्ध०, १२८/९५।

# शैवरामायणस्य पुराकथा

शैवरामायणस्य कथा परम्परया प्राप्ता रामकथासदृशा देवदानवयोः सङ्घर्षगाथा वर्तते। सङ्ग्रामोऽयं सृष्टिकालादेव प्रचलति। देवानां, प्रायः विष्णोः, अवताराणां परमप्रयोजनं साधूनां परित्राणं दुष्कृतानाञ्च विनाशोऽस्ति। सदसत्शक्त्योः विरोधस्याविच्छिन्ना परम्परा काले काले देवावतारैः दान्ता भवति किन्तु अस्याः समूलोत्खातोऽसम्भवोऽस्ति। अतो युगे युगे देवानां पृथिव्यामवतरणस्यावश्यकता सर्वदा भवति। देवासुरसङ्ग्रामाणां वर्णनं वेदपुराणयोः बाहुल्येन परिलक्ष्यते।

## वेदेषु राक्षसाः

अदेवशक्तिषु राक्षसाः मनुष्याणां प्रबलतमाः निकटतमाश्च शत्रवस्सन्ति। अकालमृत्युरोगदुःखहानयः राक्षसानां प्रभावात् भवन्ति। मनुष्याणामस्माद्रक्षणं सदैवापेक्षणीयं भवति।[३४] यातुधानपदः राक्षसस्य पर्यायोऽस्ति[३५] यस्यार्थः 'यातुः यातना पीडा तद्वतां यातुधानानाम्'[३६] भवति। स्वभावतया राक्षसाः क्रूराः घोराः[३७] अतृप्ताः[३८] कल्याणहन्तारः[३९] देवविरोधिनः[४०] अघशंसकाः[४१] यज्ञविरोधिनश्च[४२] सन्ति।

## रामकथासु राक्षसाः, राक्षसाधिपाश्च

आकृत्याः प्रकृत्याश्च राक्षसानां सुस्पष्टवर्णनं रामायणे वर्तते। रामकथासु राक्षसाधिपाः प्रायेण रावणसंज्ञकाः आसन्। एवं बहवो रावणाः सञ्जाताः। तेषु दशाननं विहाय (शैवानुसारं सहस्रकण्ठमपि) अन्येषां राक्षसेशानां संहारः सीतया वर्णितोऽस्ति। सम्भवतः शक्त्यातिशयात् रावणानां संहारः आदिशक्त्या सीताख्यया वर्णितोऽस्ति।

---

३४. निरुक्त, ४/१८; वाचस्पत्यम् (६) पृ० ४७८७; शब्दकल्पद्रुम (४), पृ० ७९ आदि।

३५. ऋग्वेद, १/३५/१०; वाजसनेयी ११/४९, ३४/३६; अमरकोश, १/१/५९, ६०; हलायुधकोश, १/७३।

३६. ऋग्वेद, ८/६०/२०, सायणभाष्य।

३७. तत्रैव, ७/१०४/२।

३८. अथर्ववेद, २/२४/२।

३९. ऋग्वेद, ७/१०४/९।

४०. तत्रैव, १/२७/३, ३७/३।

४१. तत्रैव, ७/१०४/२, ४, १४।

४२. ऋग्वेद, १०/८७/८; तैत्तिरीयसंहिता, ६/१/८/३; वाज० १/१९ आदि।

## रावणानां बहुग्रीवत्वम्

आकृतिवैशिष्ट्ये रावणानां बहुकण्ठत्वं बहुशीर्षत्वं वा प्रमुखोऽस्ति। सर्वाधिकशीर्षयुतो रावण: लक्षशीर्ष: आसीत्, यस्य हन्त्री सीता कालीरूपा[४३] रामो[४४] वासीत्। गुणभद्रकृते उत्तरे पुराणे रावणस्य परम्परा एवमस्ति—सहस्रग्रीव:, शतग्रीव:, पञ्चाशद्ग्रीव:, पुलस्त्य: दशग्रीवश्च। सङ्घदासेन क्रम: एवं वर्णित:बलि: सहस्रग्रीव:, पञ्चशतग्रीव: शतग्रीव:, पञ्चाशद्ग्रीव:, विंशतिग्रीव: दशग्रीवश्च। दशग्रीव: विंशतिग्रीवस्य सूनु: आसीत्।[४५]

शैवे बहव: रावणा: दशग्रीव:[४६] पातालल‍ङ्कायाः शतग्रीव:[४७] शाकद्वीपस्य शतकन्धर:[४८] अद्भुतरामायणस्य रावणश्च वर्णिता:[४९] सन्ति। पुष्करद्वीपेश: काश्यपेय: सहस्रकण्ठ: (रावण:) शैवरामायणस्य प्रतिनायकोऽस्ति।

रावणानां बहुशीर्षत्वे तेषां पराक्रमेण सह सृष्टिविकासोऽपि प्रच्छन्नोऽस्ति। सृष्ट्या: उन्मेषकाले पृथिव्यां पिशिताशनानां भीमकायजीवानां बाहुल्यमासीत्। अस्तित्वरक्षार्थं मानवानामेतैस्सह सततसङ्घर्षोऽभवत्। अधुना वैज्ञानिका: अपि उपर्युक्तमतं सम्पुष्टं कुर्वन्ति।

वेदोक्ता: पिशितासना: क्रव्याद:[५०] रामायणानुसारं राक्षसा: आसन् ये तपोरतान् ऋषीन् हत्वाभक्षयन्। शनै: शनै: मानवा: तान् विजित्य, क्षीणबलान् च कृत्वा स्वयं शक्तिमन्तो जाता:। रामावतारे सङ्घर्षोऽयं चरमोत्कर्षमवाप्नोतिति स्म।[५१] क्षीणबले जाते राक्षससमुदाये रावणानां शीर्षा: अपि अल्पसंख्यका: जाता:। पूर्वकाले राक्षसाधिप: लक्षशीर्ष: आसीत्। कालक्रमेण ते क्रमश: सहस्रग्रीव:, पञ्चशतग्रीव: शतग्रीव:, पञ्चाशद्ग्रीव:, विंशतिग्रीव: अन्ततो दशग्रीव: सञ्जाता:। तेषां शीर्षसंख्या ह्रासोन्मुखा जाता। रावणानां परम्परासु दशानन: सम्भवत: अन्तिम: आसीत्। तेनैव सह राक्षसी शक्ति: क्षयं गता। युद्धे शिष्टा: राक्षसा: आर्याणां प्रभुत्वं स्वीकुर्वन्ति स्म।

---

४३. विलङ्कारामायण, उत्तरखण्ड (कामिलबुल्केनोद्धृतम्, पृ० ६२४)।
४४. कामिलबुल्के, रामकथा, पृ० २४१/
४५. तत्रैव, पृ० ६२९।
४६. शैव० ६/१६!
४७. तत्रैव, ६/१७।
४८. तत्रैव, ६/१८।
४९. तत्रैव, ६/१९।
५०. ऋग्वेद, ७/१०४/२, १०/८७/१४।
५१. वाल्मीकिरामायण, अरण्य०, ६/१५-२०, २९/१२ आदि।

सृष्ट्याः विकासे जीवानां शक्ततरत्वम् अन्ततः पूर्णविकसितस्य शक्तिमतः मनुष्यस्य कल्पना पौराणिके दशावतारेऽपि विलोक्यते। सृष्ट्याः प्रथमचरणे जलचरावतारः मत्स्यावतारः जातः। पुनः जले स्थले च समानगतिकः कूर्मः, प्रथम स्थलजीवो वराहः, मनुष्यपशुसम्मिश्रोऽवतारः नृसिंहः, प्रथमो मानवातारो वामनः, पूर्णविकसिताः बलवन्तो मानवावतारा: परशुरामरामबलरामाः करुणावतारो बुद्धश्च शंसिताः सन्ति।[५२] पुनः देवविरोधिशक्तीनां क्रूरस्वभावानामभ्युदयो भवति। तेषां दमनाय क्रूरमानवावतारः कल्किः अवतरति। सृष्टिविकासस्येयं प्रक्रिया दीर्घकाले सम्पन्ना भवति। कालोऽयं चतुर्युगात्मको वर्णितः।

## शैवरामायणे वर्णितानि प्रमुखपात्राणि

**रामः**

शैवरामायणे नायको राम ज्येष्ठो दाशरथिः विष्णोः अवतारो वर्णितः। रामायणेऽस्मिन् रामोऽयोध्यानरेशोऽस्ति अतोऽत्र तस्य जीवनचरितस्योत्तरार्धं वर्णितमस्ति।

विष्णोरंशो रामो विष्णोरपेक्षया शक्तितरः प्रतीयते। विष्णुना प्राप्तवरस्य सहस्रग्रीवस्य मोक्षरूपिणी वरप्राप्तिः रामेण भवति न तु विष्णुना। अपि च विष्णुः रामस्य पराक्रमेण शय्यां प्राप्नोति। परम्परानुसारं विष्णुः सृष्ट्याः प्रागापि शेषशय्यागतः आसीत्। एवमंशभूतो रामो विष्णोरपेक्षयाधिकसामर्थ्ययुतो ग्रन्थेऽस्मिन् प्रतिभाति।[५३]

**सहस्रकण्ठः**

शैवरामायणस्यापरो प्रमुखपात्रं प्रतिनायकः सहस्रकण्ठः पुष्करद्वीपेशो दितिकश्यपयोर्तनयः यज्ञविरोधी मायावी राक्षसोऽस्ति। सोऽभिमानी शूरः युद्धक्षेत्रे नारायणमपि सम्मुखं प्राप्य युद्धात् पराङ्मुखो न भवति।

रणपण्डितः शस्त्रे मल्ले च पारङ्गतः सहस्रकण्ठः स्थले गगने च समभावेन युद्धे समर्थोऽस्ति।[५४] मल्लयुद्धे बाहुवेष्टितं सहजेन न परित्यजति।[५५] रामसन्निभः सोऽपि मल्लयुद्धस्य विभिन्नगतिषु कुशलः शंसितः।[५६]

---

५२. बलदेव उपाध्याय, पुराणविमर्श, पृ० १७७-१७८।

५३. मतमिदं डॉ० गयाचरणत्रिपाठिमहाभागेभ्यः (प्राचार्य, गङ्गानाथझाकेन्द्रीयविद्यापीठ, इलाहाबाद) प्राप्तमस्ति।

५४. शैव०, ८/१९।

५५. तत्रैव, ७/१२।

५६. तत्रैव, ८/१७।

राक्षसोऽपि सहस्रकण्ठः मुमुक्षुः विष्णुभक्तः, विष्णुः स्वयं तस्य तपसा सन्तुष्य तस्मै मोक्षस्य विष्णुपदस्य वरं दत्तवान्।[५७]

**सहस्रकण्ठः सहस्रफणयुतः शेषश्च**

सहस्रफणयुतस्य शेषस्य मूले सहस्रकण्ठस्य स्थितिः शैवरामायणस्य मौलिकी उद्भावनास्ति। उभयोः मुखानां संख्यासादृश्यं वर्तते। इदमपि सम्भवेत्, संख्यासादृश्यं मिथकस्याधारभूमिः भवेत्।

शेषसहस्रकण्ठयोः इदं वैभिन्यमस्ति यत् शेषो देवतास्ति। अस्य विष्णुना विष्णोः अवतारैश्च सह सङ्घर्ष कुत्रापि न दृश्यते, अपितु रामावतारे कृष्णावतारे च तस्य लक्ष्मणरूपेण बलरामरूपेण च सर्वेषु कार्येषु सायुज्यभागस्ति। शेषस्यास्तित्वं सृष्ट्या प्रागपि भवति। अस्य समापनं कुत्रापि न वर्णितमस्ति। सृष्टिकालेऽयं पृथिवीं स्तभनाति। किन्तु सहस्रकण्ठोऽनादिरनन्तो नास्ति।

## सहस्रकण्ठस्य सर्पत्वम्

सहस्रकण्ठस्य मृत्योरनन्तरं सर्पत्वे परिणतिः सहसा न जाता। सर्पाणां गुणाः तस्य राक्षसविग्रहेऽपि आसन्।

**क. सर्पाणां जलैस्सह सम्बन्धः**

सर्पाणां जलैः जलसिक्तक्षेत्रैस्सहघनिष्ठ सम्बन्धो दृश्यते।[५८] लोके वर्षर्तौ सर्पाः आधिक्येन परिलक्षिताः भवन्ति। वेदेषु वृत्रो यस्याभिधानमहिरपि वर्तते, जलाच्छादकः सर्प इव वर्णितोऽस्ति, पुराणप्रसिद्धस्य कालियनागस्य वासो यमुनाह्रदे आसीत्। सहस्रकण्ठस्य राजधानीं परितः समुद्रः आसीत्। जलीये देशे आवासचयनं सहस्रकण्ठस्य सर्पत्वं प्रकटयति।

**ख. निगरणम्**

सर्पाः आखेटानां निगरणं कुर्वन्ति। नागमाता सुरसा हनुमतं निगीर्णवती। सहस्रकण्ठोऽपि युद्धे समुपस्थितान् वानरान् गृहीत्वा निगीर्णवान्।

---

५७. तत्रैव, ३/१८-२०।

५८. इनसाइक्लोपीडिया आफ रिलीजन एण्ड एथिक्स, भाग ११, पृ० ३९९, ४०८।

### ग. आवेष्टनम्

भोगैरावेष्टनं सर्पाणामन्यतमो धर्मोऽस्ति। बलशालिनः एव एषामावेष्टनात् मुक्ताः भवन्ति। सहस्रकण्ठो विभीषणं युद्धे सर्प इव समावेष्टितवान्।

एवं सहस्रकण्ठे सर्पाणां धर्माः स्फुटतां गच्छन्ति।

## सर्पैस्सह वीराणां युद्धः

सर्पवीरयोर्युद्धो विश्वस्य सर्वासु पुराकथासु दृश्यते। अतिप्राचीनोऽयं संघर्षो वेदपुराणयोः नैकशः प्राप्यते।

### इन्द्रवृत्रसङ्घर्षः

सङ्घर्षोऽयं वेदेषु पुराणेषु च बहुधा वर्णितोऽस्ति। संहितासु, विशेषतः ऋग्वेदे सङ्घर्षोऽयं वीरसर्पयोरासीत्। वृत्रो जलावरोधकः सर्पोऽसुरः आसीत् यं हत्वा इन्द्रो जलान् प्रवाहायोन्मुक्तवान्।[५९] वृत्रो हस्तपादरहितः[६०] स्वनं कुर्वन्[६१] शिथिलाङ्गो, भोगेषु अतृप्तः, सपर्णशीलो, जलावरकः[६२] अहिः[६३] आसीत्। ऋग्वेदे वर्णितो वृत्रः अवेस्तावर्णितेन 'अज़ि'—संज्ञकेन सह तुलनीयः। अज़िः अश्वभक्षकः पीतवर्णकः जीवः आसीत् यः आजानुं विषं वमन्नासीत्[६४] इन्द्रः अस्य शिरः वज्रेणाभिनत्।[६५] अनयोर्युद्धः ऋग्वेदे विशदेन वर्णितोऽस्ति।[६६]

### कृष्णेन कालियदमनम्

कालिन्दीकूले कन्दुकेन क्रीडता व्रजकिशोरेण कृष्णेन कालियनागो सम्पीडित इति पुराणेषु विश्रुतमस्ति।[६७] अयमपि सर्पवीरयोर्युद्धः आसीत्।

---

५९. ऋग्वेद, १/३२/१।
६०. तत्रैव, १/३२/७।
६१. तत्रैव, १/५२/१०।
६२. तत्रैव, ४/१९/३।
६३. तत्रैव, १/३२/१, २, ५, ८, १३ आदि।
६४. सिद्धनाथशुक्ल—ऋग्वैदिक अहि और अवेस्तन अज़ि, शोधपत्रिका, साहित्य संस्थान, राजस्थान, १९७०, पृ० ३५।
६५. ऋग्वेद, १/५२/६, १०।
६६. तत्रैव, १/३२, १/५२, ४/१९ आदि।
६७. भागवत०, १०/१६, १७; विष्णु०, ५/७, हरिवंश०, विष्णुपर्व ५/७ आदि।

गरुडाद् भीत: विषधर: कालियसर्प: समुद्रं विहाय यमुनायां न्यवसत्। अस्य विषै: यमुना विषाक्ता जाता। यमुनातटे गोपालै: सह क्रीडत: कृष्णाच्च्युतं कन्दुकं जले पतितम्। तमानेतुं कृष्ण: जले प्रविष्टोऽभवत्। तत्र निवसन् एकाधिकशतशीर्षो विषधर: कालिय:[६८] तं भोगेन दृढमावेष्टितवान्।[६९] कृष्ण: तस्यावेष्टनं शिथिलीकृत्य[७०] तस्य फणेषु पादप्रहारं कृतवान् नृत्तवान् च।[७१] एवं नृत्यता कृष्णेन दलितो नाग: मुखेभ्य: रक्तवमनं कृत्वा[७२] अन्तत: पराजयं स्वीकृत्य यमुनां विहायान्यत्र गतवान्।

## दैवै: वास्तुपुरुषदमनम्

इयं कथा प्रमुखतया मत्स्यपुराणे प्राप्यते।[७३] वधे जातेऽन्धकासुरे शिव-ललाटोद्भूतस्वेदेभ्य: उल्बणो भूतोऽजायत्। सो भूत: त्रैलोक्यग्रसनायोद्यत: आसीत्। यदा स: पृथिवीं ग्रसितुमधोमुखो जात:, तस्मिन्नेव क्षणे देवा: तस्योपरि आरूढा: जाता:। तञ्च स्तब्धं कृतवन्त:। सो बुभुक्षितोऽसुर: तृप्त्यर्थं तेभ्य: अयाचत्। देवा: तं वसनात् वास्तु: इति कृत्वा गृहपूजने भागाय अधिकृतवन्त:। सोऽयं वास्तुपुरुष: नागवास्तुरूपेण अपि शंसितोऽस्ति। नागवास्तो: उपरि आरूढा: देवा: सर्पराक्षसदमनं सूचयन्ति।

## जनमेजयस्य सर्पयज्ञ:

महाभारते वर्णितेऽस्मिन्नाख्याने वीरसर्पयो: सङ्घर्षस्य यज्ञीयस्वरूप: प्राप्यते। परीक्षिततनयो जनमेजय: स्वजनकस्य मृत्यो: कारणं तक्षकदंशनं निशम्य प्रतिशोधप्रेरित: सन् सर्पसत्रमनुष्ठितवान्। यज्ञकुण्डे असंख्यका: सर्पा: वेगेनागत्य पतितवन्त:। भीत: तक्षक: इन्द्रस्य, वासुकिश्च स्वभागिनेयस्यास्तीकस्य शरणागतौ अभवताम्। इन्द्रास्तीकयो: प्रयासेन सर्पयज्ञ: शमितो जात:।[७४]

## वैदेशिकासु पुराकथासु वीरसर्पयोयुद्ध:

वीराणां सर्पै: सर्पराक्षसैर्वा सह युद्ध: भारतेतरपुराकथास्वपि प्राप्यते। तेषु कतिपयप्रमुखा: पुराकथा: एवं सन्ति।

---

६८. भागवत०, १०/१६/२८।
६९. तत्रैव, १०/१६/१०।
७०. तत्रैव, १०/१६/२३।
७१. तत्रैव, १०/१६/२६।
७२. तत्रैव, १०/१६/३०।
७३. मत्स्य०, २५२/१-१४; तुलनीय अग्नि० ४०/१; विष्णुधर्मोत्तर० ३/९५; बृहत्संहिता ५३/२, ३ आदि।
७४. महाभारत, आदिपर्व, १३-१४।

## तियामतमरडूकयोर्युद्धः

बेबिलोनदेशीयेऽस्मिन्नाख्याने तियामतसंज्ञकया सर्पिण्या सह मरडूकसंज्ञको वीरो युद्धं कृतवान्। तियामतामिधाना सर्पिणी सृष्टिकाले जलानां शासिका मातृदेवी शंसिता। तस्याः कुले मरडूकः प्राभवत्। मरडूकस्य जननी ईया तियामतदेवीं पराभूय तस्याः पतिम् आप्सूं हतवती। ईयायाः क्रुद्धा तियामतदेवी विषधरान् सर्पदैत्यान् प्रसूतवती। तस्या षडयन्त्रं ज्ञात्वा देवाः मरडूकं नायकं कृतवन्तः। सशस्त्रः मरडूकः झञ्झावातातिवृष्टिसाहाय्येन जले निवसतीं तियामतदेवीं संक्षोभ्य युद्धायाहूतवान्। सा मरडूकं निगरणाय मुखं विस्फारितवती। तस्मिन्नेव क्षणे झञ्झावाताः तस्याः उदरे प्रविष्टवन्तः येन सा उत्फुल्ला जाता। मरडूकः तस्याः उदरे मर्मस्थले च हत्वा, शीर्षं चूर्णीकृत्य तां द्विधा विभक्तवान्।[७५] एवं वीरमरडूकेन दैत्यजनन्याः तियामतसर्पिण्याः अन्तो जातः।

## टायफूनज्यूसयोर्युद्धः

यावन्यां पुराकथायां टायफूनसंज्ञकः शक्तिमान् सर्पः शंसितः यस्मात् देवाः अपि भयाक्रान्ताः आसन्। कारीशियनगुहायां जातः पृथिव्याः कनिष्ठः सुतः टायफूनः भयानकतमः आसीत्। अस्य स्कन्धतः जघनतश्च भुजरूपाः पादरूपाश्चासंख्याकाः सर्पाः ज्वालमुखाः फूत्कुर्वन्ति स्म। ज्वालमुखोऽग्निनेत्र टायफूनः सर्पसन्निभैः बाहुभिः जीवान् गृहीत्वा भक्षयति स्म। भयाक्रान्ताः देवाः आवासान् परित्यज्य पलायितवन्तः। ज्यूसः टायफूनेन बन्दीकृतः। देवाः येन केन प्रकारेण ज्यूसं कारामुक्तं कृतवन्तः। दिव्यैः भोज्यपेयादिभिश्च अर्जितशक्तिः वज्री ज्यूसः अश्वारूढो भूत्वा टायफूनेन सह युद्धमकरोत्। भीषणयुद्धेन रक्तरञ्जितः टायफूनः सिसलीदेशं पलायितो जातः। ज्यूसः तस्योपरि एटनापर्वतं निक्षिप्तवान् येन टायफूनः भूमिगतोऽभवत्। अद्यापि तस्य क्रुद्धफूत्कारेण एटनापर्वते ज्वालामुखी प्रभवति।[७६] एवं सर्पराक्षसो ज्यूसेन पराजितोऽभवत्।

## हाइड्रा-हेराक्लीजयोर्युद्धम्

यवनपुराकथासु हेराक्लीजः (रोमदेशे हरक्यूलीसः) विश्रुतवीरः शंसितः। देवेन्द्रो ज्यूसः (रोमदेशे ज्यूपिटरः) अस्य जनकः, शीलसौन्दर्यबुद्धिगुणगरिमायुता

---

७५. इनसाइक्लोपीडिया आफ रिलीजन एण्ड एथिक्स, भाग ११, पृ० ४०३; नेमिशरणमित्तल—विश्वप्रसिद्ध मिथक एवं पुराकथायें पृ० ११-१५।

७६. इनसाइक्लोपीडिया आफ रिलीजन एण्ड एथिक्स, भाग ११, पृ० ४०७; कमल नसीम—ग्रीस पुराण कथाकोष, पृ० ४७-४९।

एल्कमीनी अस्य जननी, किन्तु ज्यूसस्य पत्नी नासीत्। ज्यूसः अस्याः बुद्धिरूपादिभ्यः प्रभावितो जातः। तस्य छलपूर्णप्रणयसम्बन्धात् एल्कमीनी हेराक्लीजं प्रसूतवती।

ज्यूसस्य धर्मपत्नी हेरा सापत्नपुत्रं ईर्ष्यावशात् जिघांसति स्म, अपरतः ज्यूसः वीरपुत्रं हेराक्लीजं देवत्वं प्रदातुमिच्छति स्म। हेरा देवत्वप्राप्त्यर्थं हेराक्लीजं द्वादशानि दुष्करकार्याणि सम्पादनायादिष्टवती। तेषु कार्येषु हाइड्रावधोऽन्यतमः परिगणितः। असंख्यफणधरः दैत्यसर्पः हाइड्रा पङ्कात्मके लरनाक्षेत्रे न्यवसत्। तस्य मध्यवर्ती फणः अमरः आसीत्। हेराक्लीजस्याग्निबाणप्रहारेण विह्वलो दैत्यसर्प पङ्कात् बहिरागच्छत्। सः फणान् गदाप्रहारेण चूर्णीकृतवान् किन्तु अमरफणप्रभावात् फणाः पुनः सञ्जाताः। इदं विलोक्य हेराक्लीजस्य सारथिः इयोलसः चूर्णितान् फणान् अग्निना दग्धवान्। हेराक्लीजः तस्यामरफणं शिलाखण्डैः दमितवान्, स्वशराँश्च तस्य रक्ते निक्षिप्य विषाक्तान् कृतवान्। एवं दैत्यसर्पः हेराक्लीजेन पराजितोऽभवत्।[७७]

**हेराक्लीजस्य हेस्पेराइडसेन सह सङ्घर्षः**

हेराक्लीजः हेस्पेराइडससर्पमपि हतवान्। सर्पोऽयं कूपादुद्भूतं वृक्षं परिवेष्टयन् वर्णितः।[७८]

जैसन-परसियस-कैडमसप्रभृतयः यवनवीराः अपि सर्पराक्षसैस्सह युद्धं कृतवान्।[७९]

**अतरसर्पयोर्युद्धः**

पारसदेशीयायां पुराकथायामिदं वर्णनं प्राप्यते। अङ्गरा-माइन्यू अज़ि-दहाकस्य वधाय सर्पदैत्यं निर्मितवान्। तं सर्पम् अहुरमज्दस्य पुत्रः अतरः हतवान्[८०] अत्र सर्पदैत्यः अभिचारकर्मणः कृत्या इव प्रतीयते।

## बाइबिलग्रन्थे कुर्आनशरीफग्रन्थे च सर्पदैत्यः

बाइबिलग्रन्थे वर्णितः शैतानपदेनाभिहितः सर्पः वासनायाः प्रेरकः सर्पासुरः प्रतीयते। भारतीयमिथके नहुषस्य वासनासक्तो भूत्वा सर्पत्वे परिणतिः दैत्यसर्पाणां

---

७७. इनसाइक्लोपीडिया आफ रिलीजन एण्ड एथिक्स भाग, ११, पृ० ४०७; कमल नसीम-ग्रीसपुराण कथाकोष, पृ० ३७८-३८८; नेमिशरण मित्तल—विश्वप्रसिद्ध मिथक एवं पुराणकथायें पृ० ९२-९३।

७८. इनसाइक्लोपीडिया आफ रिलीजन एण्ड एथिक्स, भाग ११, पृ० ४०७।

७९. तत्रैव, पृ० ४०७।

८०. इनसाइक्लोपीडिया आफ रिलीजन एण्ड एथिक्स, भाग ११, पृ० ४०७।

कामवासनया सह सम्बन्धं प्रदर्शयति।

शैतानसंज्ञको दैत्यसर्पः ईश्वरनिर्मितेऽदनसंज्ञके उपवने न्यवसत्। सः ईश्वरनिर्मितं प्रथममानवयुगलं (इव संज्ञकां स्त्रीम्, एडमसंज्ञकं पुरुषं) ईश्वरस्य निषेधाज्ञायाः अवहेलनारूपपापाय प्रेरितवान्। तौ वर्जितफलं (सदसदबोधकं कामफलं) भक्षितवन्तौ। अनेन स्त्रीपुरुषयोर्मध्ये नग्नतायाः बोधः लज्जाबोधश्च जातौ। तयोः निष्कालुष्यं सारल्यादिकञ्च नष्टं जातम्। फलस्वरूपं तौ स्वर्गच्युतौ अभवताम्।[८१]

पूर्वोक्तकथा प्रकारान्तरेण कुर्आनशरीफग्रन्थेऽपि प्राप्यते। तत्र प्रथमयुगलस्य (आदमहौवासंज्ञकयोः) स्वर्गान्निष्कासनमीश्वरस्यावज्ञावशादभवत्। अस्मिन्नाख्याने प्रेरकः ईब्लीससंज्ञकः दूतः (फरिश्ता) आसीत्।[८२]

## अरबदेशे जिन्नसंज्ञकाः सर्पदैत्याः

अरबदेशीयासु पुराकथासु जिन्नसंज्ञकाः जीवाः वर्णिताः ये मूलतः सर्पराक्षसाः आसन् येषां वशीकरणस्य वर्णनं पुराकथासु प्राप्यते।[८३]

## शैवरामायणे प्रतिबिम्बिता संस्कृतिः

साहित्यं समाजस्य दर्पणं शंसितम्। रचनासु तात्कालिक्यः विमृश्यता-संस्कृतिसभ्यताः प्रतिबिम्बिताः भवान्ते। शैवरामायणेऽपि एवं परिलक्ष्यते।

## भूगोलवर्णनम्

### जनपदाः राज्याणि च

शैवे भारतवर्षस्य विभिन्नजनपदानामुल्लेखो प्राप्यते। ते सन्ति—सौराष्ट्रसिन्धु-सौवीरमागधहूणकोङ्कणकलिङ्गयवनबाह्लीककोसलाङ्गबङ्गनेपालद्राविडगुर्जरचोलकेकय-देशाः पश्चिमोत्तरराज्याणि पुलिन्दपाण्डुमत्स्यदेशाश्च।[८४] भरतस्य नेतृत्वे मेध्याश्वः पूर्वोक्तजनपदेषु राज्येषु च भ्रमणं कृतवान्। भारतीयानां द्वीपान्तरैस्सहापि सम्बन्धः आसीत्।

---

८१. बाइबिल, प्राचीन व्यवस्था (हिन्दी अनुवाद), उत्पत्ति ग्रन्थ, ३/२-२४।

८२. कुर्आनशरीफ (हिन्दी अनुवाद) पहलापार, अलिफ लाम मीम् २ सुरतुल बक्ररति, ३०-३६।

८३. इनसाइक्लोपीडिया आफ रिलीजन एण्ड एथिक्स भाग ११, पृ० ४०४।

८४. शैव०, १/१३-१५।

**पुष्करद्वीपः**

सप्तद्वीपायां वसुन्धरायां प्रथमो द्वीपः जम्बूद्वीपः, सप्तमश्च शुद्धपाथोधिवेष्टितः पुष्करद्वीपोऽस्ति।[८५] पुष्करद्वीपे चित्रवत्यां पुर्यां सहस्रकण्ठो प्रशास्ति स्म।[८६] पुराणेषु पुष्करद्वीपः शाकद्वीपानन्तरमस्ति। वर्तमानभूगोलानुसारमिदं क्षेत्रम् ईरानक्षेत्रानन्तरं भवेत्।

**शाकद्वीपः**

शैवरामायणानुसारं शाकद्वीपे शतकन्धरसंज्ञकः रावणः शास्ति स्म।[८७] पुराणेषु शाकद्वीपः क्षीरसागरपरिवेष्टितः शस्यते। भूगोलविदः कैस्पियनसागरं क्षीरसागर इति मन्यन्ते।[८८] भौगोलिकमानचित्रानुसारं कैस्पियनसागरेणावेष्टिते भूभागे ईरानदेशः, तस्मात् पूर्वे सीरियाप्रभृतिदेशाः समायान्ति।

**पातालङ्का**

पातालङ्का शतग्रीवरावणस्य राज्यमासीत्।[८९] पातालङ्का पाताले सम्भवेत्। पातालस्य स्थितिः भूमण्डलस्य पश्चिमे गोलार्द्धे वर्तमानभूगोलानुसारम् अमेरिकादेशे प्रतीयते।[९०]

पातालङ्कायाः परिचर्चा जैमिनिभारतस्य मैरावणचरिते वर्तते। मैरावणः (महीरावणः) रामलक्ष्मणौ पातालङ्कां नीत्वा तयोः बलिः दुर्गायै प्रदात्स्यति इति रावणमाश्वस्तवान्। मायानिद्रया वशीभूतयोः रामलक्ष्मणयोरपहरणं विज्ञाय हनुमान् पद्मनालमार्गेण पाताले पुनः मत्स्यराजसाहाय्येन पातालङ्कां प्रविश्य विविधप्रयत्नैः महीरावणात् रामलक्ष्मणौ मोचितवान्। अन्ततो महीरावणवधः हनुमता भवति स्म।[९१]

**समुद्रः**

पुष्करद्वीपेन सह विमलोदकस्य समुद्रस्य वर्णनं प्राप्यते।[९२] सागरेऽस्मिन्

---

८५. विष्णुपुराण, २/४; भागवत० ५/२०; मार्कण्डेय० ५४६; तु० बलदेव उपाध्याय-पुराणविमर्श, पृ० ३२३, शैव०, ३/२१।

८६. तत्रैव, २/१७।

८७. तत्रैव, ६/१८।

८८. बलदेव उपाध्याय-पुराणविमर्श, पृ० ३२५-३२९।

८९. शैव०, ६/१७।

९०. बलदेव उपाध्याय—पुराणविमर्श, पृ० ३४४।

९१. कामिल बुल्के-रामकथा, पृ० ५९५-५९६।

९२. शैव०, ३/२१।

विविधानि पुष्पितानि सरोजादीनि पुष्पाणि, मत्स्यकच्छपादयो जलजन्तवश्च क्रीडन्तः आसन्।[९३]

**पर्वताः वनानि नद्यश्च**

शैवे विन्ध्यहिमालयमेरुमन्दरनिषधहेमकूटपारियात्रप्रभृतिपर्वतानां पर्वतीयवनानां नदीनाञ्च वर्णनं प्राप्यते।[९४]

## शैवरामायणे इतिहासः

शैवे विभिन्नराजवंशाः विश्रुताःयुद्धादयश्च परिचर्चिताः सन्ति।

**इक्ष्वाकुवंशः**

इक्ष्वाकुकुलोद्भवेषु रामस्य पिता दशरथः[९५] दशरथपुत्रोऽयोध्यानरेशो रामः तस्य भार्या सीता[९६] रामस्य सहोदराः भरतलक्ष्मणशत्रुघ्नाः[९७] तस्यात्मजौ लवकुशौ[९८] शैवरामायणे वर्णिताः सन्ति।

**राक्षसवंशः**

शैवरामायणस्य प्रतिनायकः कश्यपसुतो द्विमातुरः सहस्रकण्ठः दितिगर्भाज्जातः आसीत्। कश्यपस्यापरा भार्या अदितिरासीत्।[९९] काश्यपेयस्य सहस्रकण्ठस्य तनयः पुष्कराक्षः शंसितः यः मृते जाते तु सहस्रकण्ठे चित्रवतीपुर्यामभिषिक्तो जातः।[१००]

शैवेऽन्यराक्षसाधिपानामपि वर्णनं प्राप्यते। तत्र पुलस्त्यपुत्रो दशाननो रावणः[१०१] पाताललङ्काधिपः शतग्रीवः[१०२] शाकद्वीपस्य शतकन्धरो रावणश्च[१०३] वर्णिताः सन्ति।

---

९३. ' तत्रैव, २/२।
९४. तत्रैव, २/९-१०।
९५. शैव०, १/७।
९६. तत्रैव, १/८।
९७. तत्रैव, १/२, ७/१९।
९८. तत्रैव, १२/२७।
९९. तत्रैव, २/१६-१७।
१००. तत्रैव, १०/१३, २२।
१०१. तत्रैव, ८/४।
१०२. तत्रैव, ६/७।
१०३. तत्रैव, ६/८।

## युद्धवर्णनम्

शैवरामायणे रामेण सह रावणानामनेकयुद्धाः वर्णिताः। कस्य युद्धस्य वर्णनं केन ऋषिणा कृतमिदमपि तत्रोलिखितमस्ति।

### रामदशाननयोर्युद्धः

वाल्मीकिप्रोक्ते रामायणे रामस्य दशाननेन रावणेन सह युद्धः, युद्धे च भ्रातृभिः पुत्रैश्च सह रावणवधो वर्णितोऽस्ति।[१०४]

### रामानुचरशतग्रीवयोर्युद्धः

पाताललङ्कायां शतग्रीवस्य वधो रामानुचरेण कृतः। युद्धोऽयं वसिष्ठप्रोक्ते रामायणे प्राप्यते।[१०५] वसिष्ठोक्ता रामकथा योगवासिष्ठाभिधानास्ति। कामिल-बुल्केमहोदयः वासिष्ठोत्तररामायणमुल्लिखति।[१०६] रामकथासु (जैमिनिभारतस्य मैरावणचरिते[१०७] कृतिवासरामायणे[१०८] प्रभृतिषु) पाताललङ्कायां हनुमता महिरावणस्य अहिरावणस्य च वधो वर्णितः किन्तु तयोः शतग्रीवता तत्र नोल्लिखिता।

### शतग्रीवरामयोर्युद्धः

कथेयमगस्त्येनोक्ता। शतग्रीवोऽयं पूर्वोक्तशतग्रीवात् पृथक् प्रतीयते। अस्य शाकद्वीपस्य शासकस्य वधः सीता कृतवती।[१०९]

सीतया शतग्रीववधः आनन्दरामायणे[११०] तत्त्वसङ्ग्रहरामायणे[१११] शत-मुखरावणचरिते[११२] च प्राप्यते।

---

१०४. शैव०, ६/१६।
१०५. तत्रैव, ६/१७।
१०६. कामिल बुल्के-रामकथा, पृ० १७६।
१०७. तत्रैव, पृ० ५९५।
१०८. तत्रैव, पृ० ५९७।
१०९. शैव०, ६/१८।
११०. आनन्द रामायण, राज्यकाण्ड, ४/८०-८५।
१११. तत्त्वसङ्ग्रहरामायण, ७/१-२।
११२. कामिल बुल्के, रामकथा, पृ० १७६।

**रामसहस्त्रस्कन्धयोर्युद्धः**

अस्योल्लेखोऽद्भुते रामायणेऽस्ति।[११३] तत्र रामः सहस्त्रस्कन्धेन पराजितो जातः। सीता तं हतवती।[११४] अयं पुष्करद्वीपनिवासी आसीत्।

**रामसहस्त्रकण्ठयोर्युद्धः**

अस्यैव वर्णनं शैवरामायणे प्राप्यते। स्वयं सहस्त्रकण्ठः अस्योल्लेखं करोति। अनेनेदं प्रतीयते, पूर्वोक्तः सहस्त्रस्कन्धः शैवरामायणस्य प्रतिनायकात् पृथगासीत्। यद्यपि अयमपि पुष्करद्वीपस्य शासकोऽस्ति किन्तु अस्य वधः रामेण भवति।

## शैवरामायणे राजनीतिः

शैवरामायणे राजवंशानां चरितानि वर्णितानि सन्ति, अतः राजनीतिः अत्र सहजा वर्तते। ग्रन्थेऽस्मिन् राजसभायाः मन्त्रिगणस्य दूतादिकस्य वर्णनमनेकशो दृश्यते। राजधर्मानुकूलः छलादिकानां प्रयोगः दृष्टिपथमायाति।

**अश्वमेधयज्ञः**

अयं तु न केवलं धार्मिकः कर्मकाण्डः अपितु याजकस्य राज्ञः प्रभुत्वस्यापि परिचायकोऽस्ति। अनेकान् देशान् विजित्य चक्रवर्ती सम्राट् निष्कण्टक-प्रभुत्वस्थापनायास्य अनुष्ठानं करोति। ये राजानः याजकस्याधिपत्यं स्वीकुर्वन्ति ते स्वराज्ये प्रविष्टे जातेऽश्वे अश्वानुगतेभ्यो राजपुरुषेभ्यः करं प्रददति। ये यजमानस्य प्रभुत्वं न स्वीकुर्वन्ति तेऽश्वमवरुध्य याजकेन सह युद्धं कुर्वन्ति। शैवरामायणेऽपि एवं दृश्यते। दशाननवधान्तरं रामस्याश्वमेधे सर्वे नृपाः करं दत्तवन्तः किन्तु पुष्करनरेशः सहस्त्रकण्ठः रामस्याधिपत्यमस्वीकृत्य मेध्याश्वमपहृतवान्।[११५] फलतः रामेण सह तस्य युद्धो जातः, सहस्त्रकण्ठश्च पराजितोऽभवत्।

**राजसभावर्णनम्**

शैवे रामसहस्त्रकण्ठयोः सभावर्णनं प्राप्यते।

---

११३. शैव०, ६/१९।

११४. अद्भुतरामायण, सर्ग १७-२७।

११५. शैव०, १,२/१-८।

**सहस्त्रकण्ठस्य राजसभा**

चित्रवतीपुरीस्था सहस्त्रकण्ठस्य सभा दुष्प्रवेश्यासीत् यत्र हनुमान् चित्राङ्गशुको सन् प्रविष्टो जातः। तत्र दैत्येन्द्रः समन्त्रिवर्गः तिष्ठन्नासीत्।[११६]

**रामसभा**

रामस्य राजसभा सभामण्डपे वर्णिता, यत्र काले-काले रामः स्वमन्त्रिभिः भ्रातृभिः ऋषिभिश्च सह सिंहासनमधिरुह्य परामृष्टवान्। अश्वाहरणे जातेऽपि सः तत्रैवाभ्यमन्त्रयत्।[११७]

**मन्त्रिगणः**

शैवे रामसहस्त्रकण्ठयोः मन्त्रिगणाः वर्णिताः। राम मन्त्रीन् ऋषीन् नरेशाँश्च परामृष्टवान्।[११८] सहस्त्रकण्ठस्य प्रमुखपरामर्शकोऽमात्यः रक्ताक्षः आसीत्।[११९]

**दूतः**

हनुमान् रामस्य दूतः आसीत्। सः रामस्य दौत्यमुद्ववहन् सहस्त्रकण्ठस्य सभायामुपस्थितो जातः।[१२०]

**छलप्रयोगः**

विपक्षीन् तिरस्कर्तुं पराभवितुञ्च शैवे छलस्यापि प्रयोगो दृश्यते। मेध्याश्वमपहर्तुं अमात्यः रक्ताक्षः ललाटे तिलकस्य भरतस्य बलोपरिं मत्तचूर्णस्य प्रयोगं कृतवान्।[१२१]

**राज्याभिषेकः**

सहस्त्रकण्ठस्य वधानन्तरं तस्य पुत्रस्य रत्नसिंहासनस्थस्य मन्त्रिवर्गसंवलितस्य तीर्थोदकैः पूर्णकलशैः राज्याभिषेकः छत्रचामरादिभिश्चालङ्कृतिः शैवरामायणे विशदेन वर्ण्यते।[१२२]

---

११६. तत्रैव, ४/८-९।
११७. तत्रैव, ३/३-२६।
११८. तत्रैव, ३/४-८।
११९. तत्रैव, २/४।
१२०. शैव०, २/४।
१२१. तत्रैव, २/७-८।
१२२. तत्रैव, १०/२२-२३।

## शैवरामायणे युद्धकला

रामसहस्रकण्ठयोर्युद्धवर्णनात् तात्कालिकी युद्धरीतिः शस्त्रादीनि च ज्ञायन्ते।

### युद्धप्रस्थानस्य सज्जा

युद्धाय प्रस्थानकाले सहस्रकण्ठः पताकाध्वजादिभिः युतः, बन्दीमागधादिभिः अनुकृतः, गजाश्वरथपदातिभिः संवलितश्च सज्जीभूतः। तस्मिन् काले भेरी-मृदङ्गतूर्यादिवाद्यानि निनादितानि आसन्।[१२३]

## शस्त्रास्त्राणि

शैवे दिव्यास्त्राणां सामान्यशस्त्रास्त्राणाञ्च वर्णनमेवं प्राप्यते।

### सामान्यानि शस्त्रास्त्राणि

योद्धारः स्तम्भमुद्गरपरिघशूलकुन्तपरश्वधबाण[१२४]—पर्वतपादप[१२५]—शक्ति-तोमरभिन्दिपालकुन्तासि[१२६]-सर्पोपमभल्लार्धचन्द्राणि[१२७] प्रयुञ्जन्ति स्म।

### दिव्यास्त्राणि

रामः सहस्रकण्ठवधाय विभिन्नानि दिव्यास्त्राणि प्रयुक्तवान्। तानि ऐन्द्रपाशुपत-याम्यवायव्यवारुणसौरब्राह्मकौबेराग्नेयवैष्णवसंज्ञकानि आसन्।[१२८]

शैवरामायणस्य सप्तमेऽष्टमे चाध्याये शस्त्रास्त्रैर्युद्धः वर्णितोऽस्ति।

## युद्धपद्धतिः

### निगरणम्

इयं राक्षसी युद्धपद्धतिरासीत्। सहस्रकण्ठो युद्धे समुपस्थितान् वानरान् गृहीत्वा निगरितवान्।[१२९]

---

१२३. तत्रैव, ६/३-४।
१२४. शैव०, ५/६।
१२५. तत्रैव, ५/१५।
१२६. तत्रैव, ८/१४।
१२७. तत्रैव, ९/१, ३।
१२८. तत्रैव, ८/१४-१५।
१२९. तत्रैव, ६/५।

### हस्तपादादिप्रयोग:

युद्धे शारीरबलस्यापि प्रयोग: बाहुल्येन वर्णित:। द्वन्द्वयुद्धे मुष्टामुष्टिं, पादप्रहारम्, अन्तरिक्षे भ्रामयित्वा भूमौ निक्षेपणं, चरणौ गृहीत्वा द्विधा विभाजनं[१३०] पादाभ्यां घर्षणम्[१३१] उच्छ्रयात् शत्रो: उपरि प्रपतनं, लाङ्गलादिभि: ताडनं[१३२] च वर्णितानि सन्ति।

### मल्लयुद्ध:

रामसहस्रकण्ठौ मल्लकुशलौ वलयागामिनौ नानागतिविशारदावास्ताम्।[१३३]

## शैवरामायणे वास्तु: शिल्पश्च

शैवरामायणेन तात्कालिकी समुन्नता वास्तुकला शिल्पकला च परिज्ञायते।

### दुर्गसंरचना

पुष्पकरद्वीपे स्थिता चित्रवतीपुरी उभयविधदुर्गसंरचनया कृत्रिमया सहजया च सुरक्षितासीत्। परित: सागरस्य परिवेष्टनेन[१३४] पुरी सहजतया जलदुर्गयुता सञ्जाता। एतदतिरिक्तं चित्रवती पुरी सप्तप्राकारै: परिवृतासीत्।[१३५] प्राकारेषु शृङ्गाट्टालका:[१३६] द्वात्रिंशद्द्वाराणि[१३७] शतवातायनानि[१३८] च निर्मितानि आसन्। एवं पुरी दुष्प्रवेश्या जाता।[१३९]

### सभागारम्

मन्त्रणार्थं राजभवने सभागारस्योल्लेख: प्राप्यते। सभामण्डपे राजसिंहासनं,

---

१३०. शैव०, ५/१८-२४।
१३१. तत्रैव, ७/१३।
१३२. तत्रैव, ५/४-७।
१३३. तत्रैव, ८/१७-१९।
१३४. तत्रैव, ३/२१।
१३५. तत्रैव, ४/६।
१३६. तत्रैव, २/१८।
१३७. तत्रैव, २/१९, ४/६।
१३८. तत्रैव, ४/६।
१३९. तत्रैव, ४/७।

सभेयानां कृते च यथार्हमासनानि चासन्।[१४०] सभागारे स्तम्भवर्णनमपि प्राप्यते।[१४१]

**यज्ञशाला**

राम: अश्वमेधाय सरयूतटे यज्ञशाला: निर्माय्य तत्र यज्ञवेद्य: प्रकल्पितवान्।[१४२]

**सौध:**

पुर्यां[१४३] राजभवने च[१४४] सौधा: निर्मिता: आसन्।

**राजभवनम्**

सहस्रकण्ठस्य राजभवनं राजमार्गे सुमेरुरिव स्थितमासीत्।[१४५] भवने सुवर्ण-कलश: शतवातायनानि चासन्। भवनञ्च प्राकारमण्डलेन परिवेष्टितमासीत्।[१४६] द्वाराणि कपाटै: पिहितानि आसन्। भवने नानारत्नानि मयूरशुकसारिकाश्च निनादिता: आसन्।[१४७] राजभवनेऽन्त:पुरमपि वर्णितमस्ति।[१४८]

**अलङ्करणम्**

सहस्रकण्ठस्य राजप्रासाद: पताकाध्वजवितानमुक्तामणिस्वस्तिकपुष्पैश्चालङ्कृत: आसीत्।[१४९]

## राजभवनस्योपस्करणानि

**सिंहासनम्**

सिंहासनं राजप्रासादस्याभिन्नमुपस्करणं वर्तते। अस्योल्लेख: रामसभायां,[१५०]

---

१४०. शैव०, ३/३-१०।
१४१. तत्रैव, ५/५।
१४२. तत्रैव, १२/५।
१४३. तत्रैव, ४/८।
१४४. तत्रैव, १०/१८।
१४५. तत्रैव, १०/१५।
१४६. तत्रैव, १०/१७।
१४७. तत्रैव, १०/१६।
१४८. तत्रैव, १०/२०।
१४९. तत्रैव, १०/१८, १९।
१५०. शैव०, ३/६।

पुष्कराक्षस्याभिषेकावसरे[१५१] च प्राप्यते। पुष्कराक्ष: प्रस्थानकाले रामं रत्नसिंहासनमुपग्राह्यं कृतवान्।[१५२]

## यानम्

राजभवनस्योपस्करणेषु यानं विशिष्टमस्ति। शैवे पुष्पकविमानस्य[१५३] रथगजाश्वादीनाञ्च[१५४] वर्णनं प्राप्यते।

# शैवरामायणीया: अन्या: परम्परा:

## पत्रलेखनम्

शैवे स्थलद्वये पत्रलेखनस्योल्लेखोऽस्ति। प्रथमत: मेध्याश्वस्य ललाटे बद्धं रामस्य सुवर्णपट्टाङ्कितं राजपत्रम्[१५५] अपरतश्चभरतेन इन्द्राय पत्रलेखनम्[१५६] सुवर्णपट्टाङ्कितेन राजपत्रेण सुवर्णपट्टप्रकल्पनं तस्योपरि च वर्णाङ्कनं तात्कालिकं शिल्पसौष्ठवं प्रकाशयति।

## पत्रप्रेषणम्

अन्तरिक्षादिसुदूरलक्ष्यं प्रति पत्रप्रेषणाय पत्रं लिखित्वा तच्च शरे बद्ध्वा शरसन्धानेन उत्क्षेपणं पत्रप्रेषणस्य विधिरासीत्। भरत: अनेन विधिना इन्द्राय पत्रं प्रेषितवान्।[१५७]

## सम्मोहनी विद्या

विपक्षिणां सम्मोहनाय प्रयोक्ता स्वललाटे तिलकं परपक्षे च मत्तचूर्णं प्रयुञ्जन्ति स्म। रक्ताक्ष: एवं ससैन्यं भरतं मुग्धवान्।[१५८] भाले तिलकस्य मत्तचूर्णादिकस्य सम्मोहनार्थं प्रयोग: शैवदर्शने वर्णितोऽस्ति।

---

१५१. तत्रैव, १०/२२।
१५२. तत्रैव, ११/१५।
१५३. तत्रैव, ४/५, ७/५।
१५४. तत्रैव, ६/४।
१५५. तत्रैव, १/१६, २०।
१५६. तत्रैव, २/११।
१५७. तत्रैव, २/११, १२।
१५८. शैव०, २/७।

### भोज्यपदार्थानि

अश्वमेधप्रसङ्गे विविधभोज्यपेयानां वर्णनं प्राप्यते। अभ्यागतानां स्वागतं नानाविधैः सूपैः[१५९] हिङ्गुलवणमिश्रैः शाकैः मरीच्याम्राज्यरसालतिलमाषादिचूर्णाक्तैः रसान्वितैः द्राक्षेक्षुरम्भापनसनारिकेलैः सिद्धार्थरससंयुक्तैः आज्यैश्च अभवत्।[१६०]

### पात्राणि

भोजनार्थं विभिन्नानां पात्राणामुल्लेखो वर्तते। पात्राणि सुवर्णनिर्मितानि राजतानि रत्नमयानि पर्णनिर्मितानि चासन्।[१६१]

### प्रेतकर्म

शैवे प्रेतकर्मणः उल्लेखः सहस्रग्रीवस्य वधानन्तरे प्राप्यते। मृत्योरनन्तरं पुत्रेण पुष्पकराक्षेण मृतकसंस्कारस्य दशाहपर्यन्तमशौचस्य वर्णनमस्ति।

एवं शैवरामायणे तात्कालिकी सभ्यता संस्कृतिश्च प्रतिबिम्बिता भवति। द्वीपान्तरेषु आर्याणां प्रस्तारः राक्षसेषु तेषां प्रभुत्वम् असदि सतः प्रभुता ग्रन्थस्य प्रतिपाद्योऽस्ति। रामस्य नेतृत्वे प्रथितयशस्कानां भारतीयाणां विजयध्वजोच्छ्रायो जम्बूद्वीपात् पुष्करद्वीपपर्यन्तमासमुद्रं जातः। इयमेव रामविजयामिधाना शैवरामायणे गीता रमणीया रामायणी कथास्ति।

## मातृकापरिचयः

शैवरामायणस्यैकैव मातृका गङ्गानाथझाविद्यापीठस्य सङ्ग्रहालये प्राप्यते। मातृका त्रयोदशपृष्ठयुता देवनागरीलिपिबद्धा सुस्पष्टवर्णास्ति। अनेकशः कीटदंशनेन पाठः पूर्णतया न प्राप्यते।

शैवरामायणस्य भाषा कथानुकूला भावानुकूला छन्दोबद्धा सरला सहजा प्रवाहयुता चास्ति। लघुवाक्यविन्यासैः सटीकपदैश्च ग्रन्थकर्ता युद्धवर्णनं सभावर्णनञ्च सजीवं करोति। सर्वे पाठकानां सम्मुखमेव प्रचलति, इत्येवं प्रतीयते। शब्दचित्रेषु कथानिर्वहणे च ग्रन्थकारः साफल्यमवाप्नोति।

विविधप्रसङ्गेषु सकारस्य स्थाने शकारः लिपिकर्तुः प्रमादः प्रतीयते। क्वचित्कदाचित् छन्दोभङ्गोऽपि प्राप्यते। क्वचिच्च एवमपि प्रतीयते यत् किञ्चित्

---

१५९. तत्रैव, १२/१५।
१६०. तत्रैव, १२/१५-१८।
१६१. तत्रैव, १२/१८।

वक्तव्यमवशिष्टमस्ति।[१६२] इदं लेखकस्य ग्रन्थकारस्य वा प्रमादो भवेत्।

ग्रन्थकर्तुः कालोऽभिधानश्चाज्ञातोऽस्ति। किन्तुं इदं निश्चितं यत् ग्रन्थोऽयं नास्ति अतिप्राचीनः। एतत्पूर्वं वाल्मीकिरामायणं योगवासिष्ठमद्भुतरामायणमगस्त्यरामायणञ्च लोकविश्रुतानि जातानि। अपरतः अस्य भाषा अर्वाचीना प्रतिभाति।

## मातृकायाः मङ्गलाचरणं पुष्पिका च

### मङ्गलाचरणम्

श्रीगणेशाय नमः। श्रीरेणुकायै नमः। शैवरामायणमारभते।

### पुष्पिका

१२ संमत् १९५६ फाल्गूनशुद्धचतुर्दश्यां लिखितम्।

## कृतवेदितापुष्पाञ्जलिः

मम प्रथमः पुष्पाञ्जलिः शैवरामायणस्य प्रोक्तारं शिवं श्रोत्रीं शिवां प्रति निवेदितोऽस्ति। ययोः आशीर्वादात् ग्रन्थः मम समक्षं शिथिलग्रन्थियुतो जातः। तयोः प्रसादस्वरूपाणां गङ्गानाथझाकेन्द्रीयसंस्कृतविद्यापीठस्य प्राचार्यवर्याणां डॉ० गयाचरणत्रिपाठिमहाभागानामाध्यक्षे निर्देशने चाहं कार्यं सम्पादितवती अतो ममापरो पुष्पाञ्जलिः तेभ्यः गुरुकल्पेभ्यो निवेद्यते। ते महाभागाः कार्यस्यानुमतिं प्रदाय, ग्रन्थे समागतानि जाटिल्यानि दूरीकृत्य, पदे पदे मार्गनिर्देशं कृत्वा, अन्ततः कार्यं प्रकाश्य मामुपकृतवन्तः, अतोऽहं तेषामधमर्णतामुद्वहामि।

कार्येस्मिन् वेदविभागस्याध्यक्षाणां डॉ० मायामालवीयमहाभागानां प्रेरणा, सहोदरकल्पस्य डॉ० प्रकाशपाण्डेयमहाभागस्य पदे पदे सक्रियसहयोगोऽविस्मरणीयोऽस्ति, अतोऽहं तेभ्यः कृतवेदितामर्पयामि।

प्रयागस्थस्य सन्तएन्थोनीमाध्यमिकबालिकाविद्यालयस्य प्राचार्या भगिनी मरीजा महाभागा मां बाइबिलधर्मग्रन्थं प्रदाय्योपकृतवती, अतः सापि धन्यवादार्हा। अन्ये च ये कार्येऽस्मिन् कृतसाहाय्याः तान् प्रत्यप्याभराभि। त्रुटीणां मर्षणे विद्वांसः एव प्रमाणम्।

*—विदुषां वशंवदा*

**शैलजा पाण्डेय**

---

१६२. शैव०, ९/१५-१६; २०-२१।

# शैवरामायणम्

## प्रथमोऽध्यायः

श्रीगणेशाय नमः। श्रीरेणुकायै नमः। शैवरामायणमारभते।

सूत उवाच—

कैलासशिखरे रम्ये कल्पवृक्षोपशोभिते।
गन्धर्वगणसम्पूर्णे राजतैः शि [ख] रैर्युते॥ १॥
विद्याधरैरप्सरोभिः प्रमथैश्च विराजिते।
रत्नसन्नद्धपीठे तु समासीनं तु शङ्करम्।
दृष्ट्वा सा पार्वती प्राह वचनं धर्मसम्मितम्॥ २॥

श्रीपार्वत्युवाच—

भगवन् सर्वधर्मज्ञ रामस्य चरितं शुभम्।
श्रीरामविजयं नाम ब्रूहि मे करुणाकर।
तस्यास्तद्वचनं श्रुत्वा पार्वतीं प्राह शङ्करः॥ ३॥

श्रीशङ्कर उवाच—

शृणु देवि प्रवक्ष्यामि प्रीतये गिरिकन्यके।
श्रीरामविजयं नाम सहस्त्रग्रीवनाशनम्॥ ४॥
सर्वपापप्रशमनं सर्वसौभाग्यदायकम्।
पुत्रपौत्रप्रदं नृणां चातुर्वर्गफलप्रदम्॥ ५॥
रामो दाशरथिः श्रीमानयोध्यायामभून्नृपः।
इक्ष्वाकुकुलसम्भूतः सर्वराक्षसमर्दनः॥ ६॥
कुम्भकर्णमहाकायदशास्येन्द्रजितां वधम्।
कृत्वा ह्ययोध्यां सम्प्राप्तः सीतया भ्रातृभिर्युतः॥ ७॥
पट्टाभिषिक्तो राजन्यैर्वसिष्ठाद्यैः समन्त्रिभिः।
भ्रातृभिः सहितो रामः सम्यग्राज्यमपालयत्॥ ८॥

एवं बहुतिथेऽतीते रामो राजीवलोचनः।
हयमेधं ततः कर्तुमारभद् रावणान्तकः॥ ९॥
मधुमासेऽसिते पक्षे ह्यलंकृत्य हयोत्तमम्।
चतुरङ्गबलैर्युक्तमृत्विग्भिश्च समन्वितम्॥ १०॥
नियुज्य भरतं क्षिप्रं सशत्रुघ्नमवोचत्।
भरत भ्रातृसहितो ह्यनुसृत्य हये व्रज॥ ११॥
इति रामवचः श्रुत्वा रामाज्ञां परिपालयन्।
निर्ययौ भरतः शीघ्रं हयानुसरणो द्विजाः॥ १२॥
चारयामास देशान् स तान् तान् जनपदान् बहून्।
सौराष्ट्रसिन्धुसौवीरमागधाः हूणकोङ्कणाः॥ १३॥
कलिङ्गयवनाः शूरा बाह्लीकाः कोसलादयः।
अङ्गबङ्गनृ [ने] पालाश्च द्राविडाः गुर्जराश्च ये॥ १४॥
चोलाः केकयदेशीयाः पाश्चात्याः औत्तरीयकाः।
पुलिन्दाः पाण्डवाः मात्स्याः ये द्वीपान्तरवासिनः॥ १५॥

श्रीशङ्कर उवाच—

ललाटपट्टलिखितं सौवर्णं राघवीयकम्।
पत्रं दृष्ट्वा च राजानो वाचयामासुरादरात्॥ १६॥
अयोध्याधिपतिः शूरो रामो दशरथात्मजः।
हयमेधं करोत्यद्य सरयूतीरसंस्थितः॥ १७॥
कौसल्यायाः कुमारोऽभूदंशाद् विष्णोः महात्मनः।
यज्ञीयाश्वो ह्ययं तेन मोचितोऽभूद्यथाविधिः॥ १८॥
एषां [येषां] सामर्थ्यमस्तीह युद्धं कर्तुं बलाच्च तैः।
गृह्णीयोऽश्वोऽन्यथा तैश्च करो देयो मुदान्वितैः॥ १९॥
तेषां रामाद् भयं नास्ति इतरेषां पदे पदे।
एवं विलिखितं पत्रे सौवर्णे रामणीयके।
वाचयन्तो नृपाः सर्वे ते बभूवुः [पराङ्] मुखाः॥ २०॥

*॥ इति श्रीशैवरामायणे पार्वतीशङ्करसंवादे प्रथमोऽध्यायः॥*

## द्वितीयोऽध्यायः

श्रीशङ्कर उवाच—

शृणु प्रिये ततो वृत्तं यज्ञीयाश्वस्य ते ब्रुवे।
संचरित्वा हयं भूमौ ससैन्यः [प] रिपालयन्॥
भरतो भ्रातृसहितः सिन्धुतीरमुपाश्रितः॥ १॥
राजीवोत्पलकल्हारमत्स्यकच्छपराजितम्।
विमलोदक्कल्लोलद्विजसञ्चयं घोषितम्॥ २॥
सिन्धुतीरं समुद्वीक्ष्य वासं चक्रे रघूद्वहः।
सहस्रकण्ठो दैत्येन्द्रः कश्यपस्य सुतो बली॥ ३॥
मन्त्रिवर्येण धीरेण रक्ताक्षेण स संयुतः।
यदृच्छया सञ्चरित्वा तान्तान् द्वीपान् बलान्वितान्॥ ४॥
सिन्धुतीरमुपाश्रित्य दृष्ट्वा तं भरतं तदा।
आहूय राक्षसं धीरमिदं वचनमब्रवीत्॥ ५॥
लोहिताक्ष भवान् गत्वा गृहीत्वायाहि घोटकम्।
विसृष्टस्तेन रक्ताक्षस्ततोद्वीक्ष्य हयोत्तमम्॥ ६॥
निधाय तिलकं भाले मत्तचूर्णं विकीर्य सः।
भरतं सबलं तत्र मायया मोहयन्निशि॥ ७॥
यज्ञीयाश्वं गृहीत्वासौ ययौ चित्रवतीं पुरीम्।
ततः प्रभाते विमले बलं दृष्ट्वा ह्यनश्वकम्॥ ८॥
भरतो भ्रातृसहितो बलेन महतावृतः।
विंध्य हिमालयं मेरुं मन्दरं निषधं गिरिम्॥ ९॥
हेमकूटं पारियात्रं शैलारण्यं नदीं पुरीः।
सर्वा दिशश्च विदिशो जम्बूद्वीपे [पं] व्यचिन्वत॥ १०॥
अदृश्यमानस्तुरगं भरतश्चिन्तयन् विभुः।
लिखितं लेखयित्वा तु शरे बद्ध्वा स राघवः॥ ११॥
सन्धाय कार्मुके तं तु विससर्जेन्द्रसन्निधिम्।
स ददर्श शरं दीप्तं सलेखं मघवा तदा॥ १२॥
भरतं सिन्धुतीरस्थं सभ्रातृकमुपेत्य सः।
उवाच वचनं धीरो गुरुणा सह दैवतैः॥ १३॥

**इन्द्र उवाच—**

न जानेऽहं रघुश्रेष्ठ यज्ञीयं ते तुरङ्गमम्।
त्रिदिवे नास्ति ते वाजी क्रोधत्वं मयि मा कृथाः॥
इति ब्रुवति देवेन्द्रे बृहस्पतिरुवा च तम्॥ १४॥

**बृहस्पतिरुवाच—**

तुरङ्गमस्य वृत्तान्तं वदामि श्रृणु राघव।
सहस्रकण्ठो दैत्येन्द्रः कश्यपस्य सुतो बली॥ १५॥
द्वे भार्ये कश्यपस्य [स्यास्तां] दितिश्चादितिरेव च।
दित्यामेव समुत्पन्नस्त्रिषु लोकेषु विश्रुतः॥ १६॥
ब्रह्माणं तपसोग्रेण तोषयद् भुवि राक्षसः।
तस्य प्रसादाच्चित्रवतीं पुष्करद्वीपवर्तिनीम्॥ १७॥
समवाप पुरीं रम्यां सप्तप्राकारशोभिताम्।
श्रृङ्गाट्टालकसंयुक्तां चैत्यप्रासादसङ्कुलाम्॥ १८॥
द्वात्रिंशद्द्वारसंयुक्तां नानारत्नोपशोभिताम्।
हस्त्यश्वगणसम्पूर्णां रक्षोगणनिशे [?से] विताम्॥ १९॥
दुर्गमां देवतानीकैर्दुगत्रय विशोभिताम्।
तस्यामास्ते स दैत्येन्द्रस्तेन संचोदितोऽधुना॥ २०॥
राक्षसः कश्चिदागत्य गृहीत्वा तुरगं ययौ।
तस्य तद्वचनं श्रुत्वा विस्मयाद् भरतोऽब्रवीत्॥ २१॥
अहं कथं गमिष्यामि जित्वा नेष्यामि तं कथम्।
तच्छ्रुत्वा भरतेनोक्तं पुनः प्राह बृहस्पतिः॥ २२॥
हे राजन् श्रृणु मे वाक्यमसाध्यं नास्ति ते क्वचित्।
गन्तुं तत्पुष्करं द्वीपं सयत्नो भव साम्प्रतम्॥ २३॥
रामेण संयुतस्तत्र गत्वा चित्रवतीं पुरीम्।
आगमिष्यसि तं जित्वा गृहीत्वा तुरगं पुनः॥ २४॥
इत्याभाष्य ययौ स्वर्गं पूजितस्तेन पार्वति।
इन्द्रो [ऽनु] ज्ञां गृहीत्वा च स्वपुरीमगमत्तदा॥ २५॥

*इति शैवरामायणे पार्वतीशङ्करसंवादे सहस्रकण्ठदैत्यचरिते*
*द्वितीयोऽध्यायः।*

## तृतीयोऽध्यायः

श्रीशङ्कर उवाच—

भरतोऽपि ययौ सैन्यैः संवृतः सन्निवृत्य सः।
प्रणम्यं रामं वृत्तान्तं तुरगस्य न्यवेदयत्॥ १॥
रामो निशम्य वचनं विस्मयाकुलचेतसा।
किंकर्तव्यमतोऽस्माभिरित्युवाच वचस्तदा॥ २॥
सभामण्डपमासाद्य वसिष्ठादिमुनीश्वरैः।
मन्त्रिभिर्भ्रातृभिःसार्द्धं रराज रघुपुङ्गवः॥ ३॥
सविस्मयो दाशरथिस्तदानघः सहस्त्रकण्ठस्य पुरीं विजेतुम्।
इयेष भूपालमहीसुरान्वितः समन्त्रिवर्गः स हि राजसत्तमः॥ ४॥

शिव उवाच—

शृणु देवि प्रवक्ष्यामि रामस्य चरितं शुभम्।
रामेण यत्कृतं कर्म सहस्त्रग्रीवनाशनम्॥ ५॥
सिंहासनगतो रामो [ मः ] आनयामास तान् ऋषीन्।
वसिष्ठो वामेदवश्च वाल्मीकिर्नारदो भृगुः॥ ६॥
अगस्त्यो रैव्यकः कण्वः कण्डुः शौनकपर्वतौ।
सुतीक्ष्णः शङ्खलिखितौ मार्कण्डेयोऽत्रिगौतमौ॥ ७॥
जाबालिर्जमदग्निश्च शतानन्दोऽप्यथापरे।
रामस्य मन्दिरं प्रापुः विश्वामित्रादयोऽपि च॥ ८॥
समागतान् मुनीन् वीक्ष्य सहसोत्थाय चासनात्।
प्रणम्य दत्त्वासनानि पूजां कृत्वा पृथक् पृथक्॥ ९॥
स्थित्वासने चिरं ध्यात्वा प्रोवाच मुनिसत्तमान्।
शृणुध्वं मुनयः सर्वे मदीयं वाक्यमुत्तमम्॥ १०॥
मया विसृष्टस्तुरगो गृहीतः केन रक्षसा।
किंकर्तव्यं मया ह्यत्र भवद्भिस्तद्विधीयताम्॥ ११॥
रामस्य वचनं श्रुत्वा जाबालिर्वाक्यमब्रवीत्।
रामचन्द्र महाबाहो शृणु मद्वचनं हितम्॥ १२॥

कश्यपस्य सुतो दित्यां सहस्रवदनोऽभवत्।
स एवोग्रं तपस्तप्त्वा सम्यग्दत्तवरः सुरैः॥ १३॥
जित्वा त्रिलोकान् दैत्येन्द्रो ह्यष्टौ दिक्पालकानपि।
मुक्तिकामस्तपश्चक्रे वत्सराणां सहस्रकम्॥
तदा तार्क्ष्ये समारुह्य आविरासीद्रमापतिः॥ १४॥

विष्णुरुवाच—

किमर्थं तप्यसे दैत्य ब्रूहि सर्वमशेषतः।
अभीष्टं तव दास्यामि तपसा तोषितोऽस्मिहम्[ ?ऽस्म्यहम्] ॥ १५॥
इत्युक्तो स हि दैत्येन्द्रस्तं प्राह रघुपुङ्गवः।
मुक्तिकामो ह्यहं विष्णो दातव्यं त्वत्पदं मम॥ १६॥
इति तद्वचनं श्रुत्वा विष्णुः प्राहासुरं पुनः।
भो दैत्य मानुषो भूत्वा दास्येऽहं तव कांक्षितम॥ १७॥
कुले दशरथस्याशुर्मम जन्म भविष्यति।
तस्मिन् जन्मनि ते हत्वा रणेऽहं दैत्यवल्लभ॥ १८॥
शेषत्वं ते प्रदास्यामि शयनँ मे भविष्यसि।
मदीयं शयनं भूत्वा मदीयं स्थानमेष्यसि॥ १९॥
इतीरितस्त्वया राम दैत्येन्द्रः स्वपुरं ययौ।
त्वदागमनमाकांक्षन्नास्ते चित्रवतीपुरे॥ २०॥
तस्मिन् स पुष्पकरद्वीपे शुद्धपाथोधिवेष्टिते।
मरणार्थिनोऽस्य दूतो रक्ताक्ष इति विश्रुतः॥ २१॥
चोदितो दैत्यराजेन गृहीत्वा तुरगं ययौ।
भवान् हि पुष्पकारुढः सुग्रीवादिगणान्वितः॥ २२॥
गत्वा तं पुष्पकरं द्वीपं जित्वा शत्रुं रणेऽधुना॥
देवतानां सुखं कृत्वा गृहीत्वा तुरगं पुनः॥ २३॥
अयोध्यापुरमागत्य कुरु भूयो महाक्रतुम्।
सहस्रास्यस्त्व [ या ] सोऽपि निर्जितः शेषतां गतः॥ २४॥
सहस्रफणवान् भूत्वा तव शय्या भविष्यति।
मयोक्तं सर्वमेतद्धि कुरु यत्नमतन्द्रितः।
इत्युक्त्वा विररामाथ जाबालिर्भगवानृषिः॥ २५॥

*इति शैवरामायणे पार्वतीशङ्करसंवादे सहस्रकण्ठचरिते*

*तृतीयोऽध्यायः*

# चतुर्थोऽध्यायः

श्रीशङ्कर उवाच—

जाबालेस्तु वचः श्रुत्वा राघवः परवीरहा।
जाबालिनञ्च सम्पूज्य सर्वान् ऋषिगणान् तथा॥ १॥
निर्वर्त्य सर्वान् राजर्षीन् सोदरैः सहितोऽनघः।
सस्मार पुष्पकं रामः स्मरणेनाययौ च तम्॥ २॥
दृष्ट्वा तत्पुष्पकं राम आरुरोह स सानुजः।
सुग्रीवो वानरैः सार्द्धमाञ्जनेयाङ्गदादिभिः॥ ३॥
बिभीषणोऽपि रक्षोभिः सायुधैः शतकोटिभिः।
नानादेशस्थिताः ये च नानाद्वीपनिवासिनः॥ ४॥
हस्त्यश्वरथपादान्ता आरुहन् पुष्पकं तदा।
अथ रामो महातेजा ययौ चित्रवर्तीं पुरीम्॥ ५॥
तत प्राकारशोभाभिरग्निज्वालामिवस्थिताम्।
द्वात्रिंशद्वारसंयुक्तां वातायनशतैर्युताम्॥ ६॥
वीक्ष्य विस्मयमापन्नः पुरद्वारमुपागमत्।
चित्रवर्णशुकाङ्गः सन् प्राकारान् तानलङ्घयत्॥ ७॥
गत्वा तत्पुरतः स्थित्वा सौधोपरि समीरजः।
शुकश्चचार तं दैत्यं लोभयन् देहकान्तिभिः॥ ८॥
सहस्त्रकण्ठो दैत्येन्द्रो मन्त्रिभिः परिवेष्टितः।
स्थित्वा सभायां पक्षीन्द्रं ददर्श शुकरूपिणम्॥ ९॥
चित्रवर्णशुकं वीक्ष्य लोहिताक्षमथाब्रवीत्।
कोऽयं शुकश्चित्रवर्णः क्वागतस्तु किमागतः॥ १०॥
प्रेषितः केन प्रष्टव्यो गृहीतव्योऽधुना त्वया।
इति तेन समादिष्टो लोहिताक्षोऽब्रवीच्छुकम्॥ ११॥
कस्माद्देशादागतोऽसि प्रेषितः केन साम्प्रतम्।
इन्द्रेण हव्यवाहेन यमेन वरुणेन वा॥ १२॥
वायुना नैर्ऋतेनाथ शूलिना धनदेन वा।
कोऽसि त्वं ब्रूहि तत्त्वेन दूतधर्मेण भो शुक॥ १३॥

इत्युक्तो मारुतिस्तत्र लोहिताक्षेण पार्वति।
हनूमान् प्रत्युवाचाथ सहस्त्रग्रीवराक्षासम्॥ १४॥
सहस्त्रकण्ठदैत्येन्द्र मदीयागमनं शृणु।
रामो दाशरथिः श्रीमान् रावणासुरमर्दनः॥ १५॥
अकरोद् हयमेधं यो तस्याश्वं भरतो विभुः।
सञ्चचार पृथिव्यां हि यज्ञीयाश्वस्तदागमत्॥ १६॥
त्वत्पुरे तवदूतेन हृतः किल तवाज्ञया।
तस्मादहं प्रेषितो वै नेतुं चाश्वं त्वदन्तिके॥ १७॥
आञ्जनेयोऽस्मि रामस्य दूतोऽहं राक्षसेश्वर।
स रामः सोदरैः सार्द्धं सुग्रीवो वानरैः सह॥ १८॥
विभीषणो राक्षसैश्च भूपाः द्वीपनिवासिनः।
युष्मत्पुरसमीपे ते आगतः समरैषिणः॥ १९॥
रामचन्द्रो महाबाहुः दयां कृत्वा तवोपरि।
प्रेषयामास सामार्थं मामवेहि निशाचर॥ २०॥
एकापराधे सर्वेषां निधनं भवितादध्रुवम्।
अहं तुभ्यं हितं वच्मि शृणु मद्वाक्यमुत्तमम्॥ २१॥
सहस्त्रकण्ठदैत्येन्द्र [ह] यं तस्मै प्रदापय।
नो चेत् तव [ ? चेदप ] हरिष्यन्ति रामबाणाः शिरांसि ते॥ २२॥

*इति श्रीशैवरामायणे पार्वतीशङ्करसंवादे सहस्त्रकण्ठचरिते*
*चतुर्थोऽध्यायः।*

## पञ्चमोऽध्यायः

श्रीशङ्कर उवाच—

अथोवाच सहस्त्रास्यो हनूमन्तमिदं वचः।
रामः कः को भवानद्य कुत आयासि वानरः॥ १॥
अत्र किं तिष्ठसे मूढ न मोक्ष्ये तुरगं क्वचित्।
निवेदय त्वं गच्छाद्य तस्मै रामाय मद्वचः॥ २॥
इत्युक्त्वा राक्षसानाह गृह्यतामेष दुर्मतिः।
इत्युक्तं तद्वचः श्रुत्वा शुकरूपं विसृज्य सः॥ ३॥

खेचरः कपिरूपेण न्यपतत् तस्य मूर्द्धसु।
पातयित्वा किरीटानि भूषणानि विकीर्य सः॥ ४॥
उत्पाट्य स्तम्भमेकं तं ताडयामास मारुतिः।
एतस्मिन्नन्तरे दैत्या लोहिताक्षादयः कपिम्॥ ५॥
मुद्गरैः परिघैस्तीक्ष्णै शूलैः कुन्तैः परश्वधैः।
बाणैः सन्ताडयामासुः सहस्त्रग्रीवचोदिताः॥ ६॥
हनूमानपि बालेन ताडयामास राक्षसान्।
ततो हनूमान् उधृ [द्ध] त्य रामसन्निधिमाययौ॥ ७॥
नमस्कृत्वाथ रामाय सहस्त्रग्रीवभाषितम्।
न्यवेदयत् स तत्सर्वं श्रुत्वा रामो महाबलः॥ ८॥
सुग्रीवपुरमाहूय बलं वानरराक्षसौ।
विभीषणमथामन्त्र्य ह्युवाच रघुसत्तमः॥ ९॥
गच्छन्तु वानराः सर्वे युद्धाय सह राक्षसैः।
इत्युक्तास्ते कपिश्रेष्ठाः प्राप्नुयुस्तत्पुरीं ततः॥ १०॥
शृङ्गारण्यारूह्य कपयः प्राकारानवतीर्य च।
सिंहनादं ततश्चक्रुः सुग्रीवप्रमुखास्तदा॥ ११॥
सहस्त्रकण्ठानुचरा निर्ययुर्नगरात् ततः।
गजवाजिरथारूढाः सहस्त्रग्रीवचोदिताः॥ १२॥
सिंहनादं प्रकुर्वाणास्तस्थुर्युद्धाभिकांक्षिणः।
दृष्ट्वाङ्गदः समायातान् सुग्रीवः पवनात्मजः॥ १३॥
गजो गवाक्षो गवयः शरभो नीलरम्भकौ।
सुषेणजीववत्तारमैंदद्विविदधूम्रकाः ॥ १४॥
एते चान्ये कपिश्रेष्ठाः पर्वतानपि पादपान्।
गृहीत्वा संययुस्तत्र तदा रामप्रचोदिताः॥ १५॥
आहवे वानराः सर्वे युद्धं चक्रुः परस्परम्।
ज्वालामुखेन सुग्रीवो लोहितास्येन चाङ्गदः॥ १६॥
नीलोऽपि तीक्ष्णदंष्ट्रेण रक्ताक्षेणाञ्जनीसुतः।
पादपै पर्वताग्रैश्च जघ्नुस्ते राक्षसान् बहून्॥ १७॥
राक्षसास्ते शरैस्तीक्ष्णैर्निर्जघ्नुः कपिकुञ्जरान्।
ज्वालामुखो ववर्षाजौ सुग्रीवे शरसन्ततिः॥ १८॥

तानन्तरिक्षे सुग्रीवः पादपैरच्छिनत् तदा।
ज्वालामुखं च सुग्रीवश्चरणाभ्यामताडयत्॥ १९॥
तस्य पादप्रहारेण ममार स हि राक्षसः।
रक्ताक्षो मारुतिं तत्र लोहितास्योऽङ्गदं तदा॥ २०॥
तीक्ष्णदंष्ट्रोऽपि नीलञ्च ववर्ष शरसन्ततिम्।
लोहितास्यं बालिपुत्रो मुष्टिना प्रहरद् युधि॥ २१॥
तन्मुष्टिनैव निहतः सोऽपि देहममूमुचत्।
हनूमानपि रक्ताक्षं वालेनावेष्ट्य खेचरः॥ २२॥
भ्रामइ [यि] त्वा पातिते स चूर्णतां समुपागमत्।
नीलोऽपि [व] ज्र [दं] ष्ट्रस्य गृहीत्वा चरणौ तदा॥ २३॥
द्वेधा विभज्य तं वीरं पातयामास भूतले।
एवं विनिहताः सर्वे राक्षसाः कपिभि [स्त] दा॥ २४॥
हतशेषाः समाजग्मुः सहस्रग्रीवसन्निधिम्।
चतुर्णां राक्षसानां वै मरणं ते न्यवेदयन्॥ २५॥
ततः परं राक्षसपुङ्गवानां निशम्य नाशं कपिसैन्यमुख्यैः।
सहस्रकण्ठः प्रलयानलो यथा जाज्वल्यमानः स रणाय निर्ययौ॥ २६॥

*इति श्रीशैवरामायणे पार्वतीशङ्करसंवादे सहस्रकण्ठचरिते पञ्चमोऽध्यायः।*

## षष्ठोऽध्यायः

शिव उवाच—

शृणु प्रिये कथामेतां सहस्रग्रीवरक्षसः।
श्रोतृणां परमाश्चर्यकारिणीं शुभदायिनीम्॥ १॥
सहस्रकण्ठो दैत्येन्द्रः कोटीनां कोटिभिर्वृतः।
राक्षसानां च मुख्यानां युद्धे विजयकांक्षिणाम्॥ २॥
पताकाध्वजमुख्यैश्च मौक्तिकछत्रचामरैः।
बन्दिमागधसूतैश्च तूर्यघोषैरलङ्कृतः॥ ३॥
भेरीमृदङ्गनादैश्च चतुर्वाद्यविघोषितैः।
नागाश्वरथपादातैः निर्ययौ नगरात्ततः॥ ४॥

उल्लङ्घ्य सप्तप्राकारान् योजनानां शतोन्नतान्।
हस्तान् प्रसार्य संगृह्य सुग्रीवादीनभक्षयत्॥ ५॥
वदनेषु प्रविश्यैते कर्णेभ्यः कपिकुञ्जराः।
नासिकाभ्यश्च निर्गत्य रामसन्निधिमाययुः॥ ६॥
एतस्मिन्नन्तरे देवाः यक्षविद्याधरोरगाः।
किन्नराः गुह्यकाः सिद्धाः साध्याः किम्पुरुषास्तदा॥ ७॥
ब्रह्मर्षयो महर्ष्याद्याः पिशाचाः दैत्यराक्षसाः।
द्रष्टुं समागताः युद्धं रामसाहस्रकण्ठयोः॥ ८॥
दृष्ट्वा तस्याहवं घोरं बबु [भू] वुर्भयविह्वलाः।
न शक्नुस्तत्र ते स्थातुं रणभूमिं विहाय वै॥ ९॥
विमानेष्वपि चारुह्य ह्याकाशे दूरतः स्थिताः।
सहस्रकण्ठदैत्येन्द्रो गगने ददृशे च तान्॥ १०॥
एतेऽपि शत्रवो मे वै प्रहरामि समागतान्।
एवं विचार्य मनसि दुष्टो राक्षससत्तमः॥ ११॥
रणभूमिं विहायाशु गतोड्डीय क्षणात्ततः।
उड्डीयोड्डीय संगृह्य विमानानि तदासुरः॥ १२॥
चिक्षेप भूतले दैत्यो क्रुधा तानहनत्प्रिये।
ऋषीन् दृष्ट्वा मुमोचाऽऽ ब्रह्मर्षीननलप्रभान्॥ १३॥
तदा ह्यनर्थमूलं च राक्षसं भीमविक्रमम्।
अवोचन् ऋषयस्तत्र निर्भयाः गतसाध्वसाः॥ १४॥
शृणु राक्षस दैत्येन्द्र वदामस्ते प्रियं हितम्।
रामो राक्षसनाशार्थं ह्यवतीर्णोऽस्ति भूतले॥ १५॥
दशग्रीवस्य हननं सपुत्रं सहबान्धवम्।
कृतं रामेण च पुरा श्रुतं वाल्मीकिनोदितम्॥ १६॥
शतग्रीवस्य मरणं यस्यानुचरहस्ततः।
पातालकङ्के यज्जातं वसिष्ठस्य मुखाच्छ्रुतम्॥ १७॥
शाकद्वीपनिवासी च रावणो शतकन्धरः।
नाशितः सीतया पत्न्या अगस्त्येनोदितं पुरा॥ १८॥
रामायणेऽद्भुते जातो रावणस्य वधोद्यमः।
एवं विधाश्च बहवो राक्षसाः पिशिताशनाः॥ १९॥

नाशित [ाः] [ते] न रामेण तस्मात् त्वं सङ्गरं त्यज।
यज्ञीयाश्वं तस्य देहि यदि जीवितुमिच्छसि॥ २०॥
इति ते ह्यब्रुवन् सर्वे ऋषयश्च तपोधनाः।
ऋ [षी] णां वचनं श्रुत्वा प्रोवाच वचनं तदा॥ २१॥
शृणुध्वम् ऋषयः सर्वे यद्यसौ निहनिष्यति।
न मेऽस्ति भीश्च मरणे यदि हन्ता ममास्तु वै॥ २२॥
विनाशी [शो] विग्रहोऽस्तीह तस्यार्थे किं विलापनम्।
वीराणां च स्वभावो हि न पश्चात् परिवर्तनम्॥ २३॥
इति सहस्रकण्ठवचो निशम्य मुनयो विमला विचार्य मानसे।
न समर्था भवितव्यनिवारणे कथनं विफलं न चास्मदीयानाम्॥ २४॥

*इति श्रीशैवरामायणे शिवपार्वतीसंवादे सहस्रकण्ठ-ऋषिप्रस्तावे षष्ठोऽध्यायः।*

## सप्तमोऽध्यायः

शिव उवाच—

सहस्रकण्ठदैत्योऽपि परसैन्यमुवाच ह।
पराक्रमं प्रकुर्वन्तु यत्साहाय्येन चागताः॥ १॥
इति दैत्यवचः श्रुत्वा भरताद्याः महाबलाः।
युद्धं चक्रुस्तदा ते वै सहसैन्यैः पुरस्कृताः॥ २॥
क्षणेन सर्वसैन्यं तद् भक्षितं तेन रक्षसा।
भरतेनोदितं सर्वं रामायामिततेजसे॥ ३॥
स्वसैन्यं भक्षितं श्रुत्वा राघवः परवीरहा।
आहूय वानरेन्द्रञ्च हनूमन्तमथाङ्गदम्॥ ४॥
पुष्पके तान् समारोप्य स्वयमप्यारुरोहतम्।
सर्वेऽपि पुष्पके स्थित्वा युद्धं कर्तुं प्रचक्रमुः॥ ५॥
अन्तरिक्षगते तस्मिन् पुष्पके कामगे शुभे।
रामो विभीषणं प्राह वचनं मधुराक्षरम्॥ ६॥
विभीषणासुरश्रेष्ठ पश्य साहस्रकन्धरम्।
कुम्भकर्णोऽतिकायश्च दशास्यः शतकन्धरः॥ ७॥

एतेऽपि राक्षसाः सर्वे युद्धाय कृतनिश्चयाः।
दृश्यन्तेऽत्र न सन्देहो कुरु युद्धं ममाज्ञया॥ ८॥
अनुज्ञातः स रामेण ह्यन्तरिक्षगतोऽब्रवीत्।
विभीषणोऽहं दैत्येन्द्र युद्धं कुरु मया सह॥ ९॥
इत्युदीर्य शरान् तीक्ष्णान् स ववर्ष बहूनपि।
विभीषणविमुक्तान्स्तान्छ [ च्छ ] रान् श्चिच्छेद सायकैः॥ १०॥
ततः परं तु शत्रुघ्नो भरतो लक्ष्मणो धनुः।
सज्जं कृत्वा प्रमुमुचुः शरवर्षाणि संयुगे॥ ११॥
सहस्त्रकण्ठस्तान् छित्वा नाराचान् स्वायुधैश्च ह।
विभीषणं समालिङ्ग्य वध्वो ( बद्ध्वो ) त्क्षिप्य करैर्भुवि॥ १२॥
पादाभ्यां घट्टितो तेन मूर्च्छितोऽभूद् विभीषणः।
धृत्वा धनूंषि हस्तानां सहस्त्रेण तदासुरः॥ १३॥
शरान् हस्तसहस्त्रेण ववर्ष कपिकुञ्जरान्।
सुग्रीवमङ्गदं धूम्रं नलं नीलं समीरजम्॥ १४॥
तारं दधिमुखं रम्भं सर्वान् वानरपुङ्गवान्।
पातयामास विशिखैरनेकैः सः पृथक् पृथक्॥ १५॥
संधाय विविधास्त्राणि शत्रुघ्नं भरतं तदा।
लक्ष्मणञ्च महावीरो ववर्षाम्बुदसन्निभः॥ १६॥
एकं दश शतं तेषु सहस्त्रमयुतं तदा।
नियुतं प्रयुतं कोटिप्रकोटीः शतकोटिकाः॥ १७॥
अर्बुदन्यर्बुदन्येव सन्धाय विशिखान्धनौ।
शिरोऽङ्गपादपर्यन्तं भेदयामास वानरान्॥ १८॥
भरतस्य च सौमित्रेः शत्रुघ्नस्य व्यदारयत्।
आभान्ति शरनिर्भिन्नाः पुष्पिता इव किंशुकाः॥ १९॥
तदा लक्ष्मणशत्रुघ्नभरताः समितिञ्जयाः।
प्रमाणातीते सर्वाङ्गे सहस्त्रशतयोजने॥ २०॥
मेरुर्नियुतविस्तारयोजनो दैत्यवल्लभः।
राक्षसेन्द्रोऽद्रिसङ्घातवेष्टितः स इवाबभौ॥ २१॥
तस्य गात्रसमाश्लिष्टा वानरा सम्प्रकाशिरे।
सुरालयसमाश्लिष्टा लोका इव रणाङ्गणे॥ २२॥

सहस्त्रकण्ठः संगृह्य पाणिभिस्तानभक्षयत्।
अर्द्दयत् पादसङ्घातैर्दिव्यास्त्रैरप्यपातयत्॥ २३॥
सहस्त्रबाणैर्विव्याध सुग्रीवं सविभीषणम्।
भरतं लक्ष्मणं तत्र शत्रुघ्नं युगपत् पृथक्॥ २४॥
तस्य तीक्ष्णशराघातैः सर्वे निपतिता भुवि।
पातइ [ यि ] त्वा चमूं सर्वां ससुग्रीवां सराघवाम्॥ २५॥
सराक्षसां तदा कृत्वा सहस्त्रग्रीवः आबभौ।
दृष्ट्वा रामो महातेजाश्चमूं विस्मयमागतः॥ २६॥
ससज्जं धनुरादाय सशरोऽभिमुखो ययौ।
एवं समुद्यतं वीरं राघवं रणकोविदम्॥ २७॥
समालक्ष्य तदा धीरः प्रलयाम्बुधरो यथा।
आजगाम तदा गर्जन् ज्वलज्वा [ ज्वा ] लानलोपमः॥ २८॥
कृताट्टहासवदनः कुर्वन् रामस्य विस्मयम्।
दिव्यास्त्रशस्त्रसंयुक्तः प्रपेदे तं रघूत्तमम्॥ २९॥
त्रैलोक्यवीरेण रघूत्तमेन वै मृगाधिपेनैव सहस्त्रकन्धरः।
आयोधने मत्तगजेन्द्रवत्तदा समाययावात्तधनुः शरासनः॥ ३०॥

*इति श्रीशैवरामायणे पार्वतीश्वरसंवादे सप्तमोऽध्यायः।*

## अष्टमोऽध्यायः

ईश्वर उवाच—

सहस्त्रकन्धरो हस्तैर्धृतबाणशरासनः।
रामस्याभिमुखे स्थित्वा जगाद परुषाक्षरम्॥ १॥
त्यक्त्वा राज्यं भवान् राम दण्डकारण्यमाश्रितः।
विराधञ्च कबन्धञ्च हत्वा प्राप्य समीरजम्॥ २॥
सुग्रीवसहितः संख्ये बालिनं बलशालिनम्।
हत्वा तं वानरैर्युक्तः सीतायाः कुशलं तदा॥ ३॥
ज्ञात्वा जलनिधिं तीर्त्वा रुन्धन् लङ्कापुरीं ततः।
जित्वा दशास्यं सङ्ग्रामे पौलस्त्यं लोककण्टकम्॥ ४॥

अयोध्यां सीतया सार्द्धं प्राप्तवानसि राघव।
दशास्यं प्राकृतं जित्वा बलवानिति गर्वितः॥ ५॥
द्वीपान् तीर्त्त्वोदधीन् सर्वान् किमायासि ममान्तिकम्।
इन्द्रादिलोकपालांश्च जित्वाहं रणकर्मणि॥ ६॥
प्राकृतानि हता ये ये राक्षसाः रावणादयः।
मन्यसेऽमुं तथा राम प्रख्यातबलपौरुषम्॥ ७॥
अवेहि त्वं रणे शूरं सहस्त्रग्रीवमुत्तमम्।
त्वदीयाश्वं न मोक्ष्येऽहमनुजानामि त्वाधुना॥ ८॥
गच्छेदानीं बलैर्युक्तः त्वदीयं पत्तनं पुनः।
पश्यतस्ते न चेत्सर्वं बलमत्र वनौकसाम्॥ ९॥
भक्षयिष्याम्यहं त्वाद्य रणे सभ्रातृकं नृप।
निशम्य राघवो धीरः सहस्त्रग्रीवभाषितम्॥ १०॥
अब्रवीद् राक्षसं वाक्यं सहस्त्रग्रीवमुद्धतम्।
त्वं मुधा कत्थ [त्थ्य] से दैत्य दर्शयस्व पराक्रमम्॥ ११॥
मदीयं तुरगं वाद्य यज्ञीयं मे ददस्व तम्।
नो चेन्मद्विशिखैस्तीक्ष्णैः पातयिष्ये शिरांसि ते॥ १२॥
इत्युक्तः स च दैत्येन्द्रो ववर्ष शरसन्ततिम्।
रामोऽपि विशिखैस्तीक्ष्णैराच्छिनद् विशिखावलिम्॥ १३॥
शक्तितोमरकुन्तासिभिन्द्रि [न्दि] पालैरभेदयत्।
ऐन्द्रं पाशुपतं याम्यं वायव्यं वारुणं तदा॥ १४॥
सौरं ब्राह्मं कौबेरमाग्नेयं वैष्णवं परम्।
दैत्येन्द्रस्य विनाशाय मुमोचास्त्राणि राघवः॥ १५॥
जहार समरे दैत्यस्तदास्त्राणि शरोत्तमैः।
इत्थं राघवदैत्येन्द्रौ भ्रामयन्तौ परस्परम्॥ १६॥
वलयागामिनौ धीरौ नानागतिविशारदौ।
कण्ठीरवनिभौ तूभावन्योन्यजयकांक्षिणौ॥ १७॥
युद्ध्यमानौ तदा शूरौ पर्वतेन्द्राविव स्थितौ।
अशोभतामुभौ युद्धे प्रख्यातबलपौरुषौ॥ १८॥
अन्तरिक्षान्तरस्थौच्चौ मल्लयुद्धविशारदौ।
परस्परोपमौ ख्यातौ समुद्राविव दुर्धरौ॥ १९॥

सर्वे देवाः सदैतेयाः यक्षाः साध्याश्च खेचराः।
विस्मयं परमं जग्मुः समुद्वीक्ष्य रणं तयोः॥ २०॥
सुग्रीवो ह्यङ्गदो नीलो हनूमांश्च विभीषणः।
पादपैः पर्वतैर्दन्तैर्नखरैर्बालघट्टनैः॥ २१॥
निजघ्नुः राक्षसान् सर्वान् ज्वलज्वा [ ज्वा ] लानलोपमान्।
यामार्द्धेन हताः सर्वे राक्षसाः शङ्कुकोटयः॥ २२॥

*इति श्रीशैवरामायणे पार्वतीश्वरसंवादे अष्टमोऽध्यायः।*

## नवमोऽध्यायः

ईश्वर उवाच—

अथ रामो महातेजाः भल्लैराशीविषोपमैः।
छेदयामास हस्तांश्च शिरांस्यस्य बहूनि च॥ १॥
समुद्वीक्ष्य तदा रामं स्वशिरः करघातकम्।
गृहीत्वा भ्रामइ [ यि ] त्वालं वेगेनाक्षिपत् त्क्षि [ क्षि ] तौ॥ २॥
अर्धचन्द्रेणान्तरिक्षे छित्वा तस्य करौ भुवि।
पातयामास रामोऽपि लाघवं दर्शयन् रिपोः॥ ३॥
सहस्त्रकण्ठः दैत्येन्द्रो विस्मयाकुलमानसः।
राममालक्ष्य समरे प्रवृद्धं रणपण्डितम्॥ ४॥
एकावशेषितशिरा उवाच रुषयान्वितः।
कुतो गच्छसि राम त्वं रणे त्वां न त्यजाम्यहम्॥ ५॥
यज्ञीयाश्वं न दास्यामि भवान् यदि पुमान् भवेत्।
जित्वा मां समरे राम गृहाण तुरगं तव॥ ६॥
नो चेत् प्राणान् हरिष्यामि सर्वेषां च वनौकसाम्।
ससोदरस्य सैन्यस्य वृथायासेन किं प्रभो॥ ७॥
विदार्यमाणो यास्येऽहं त्वदस्त्रैर्मुक्तिवल्लभाम्।
इत्युक्तवन्तं दैत्येन्द्रं सहस्त्रास्यं रघूत्तमः॥ ८॥
नारायणास्त्रं सन्धाय कार्मुके मुमुचे तदा।
तदस्त्रं मन्त्रजुष्टं सत् ज्वलज्वा [ ज्वा ] लानलोपमम्॥ ९॥
प्रविश्य हृदयं तस्य प्राणान् हृत्वाययौ पुनः।
सहस्त्रकण्ठनालेभ्यस्तद्रामान्तिकमाययौ ॥ १०॥

रामबाणविनिर्भिन्नं शरीरं सन्त्यन् [सन्त्यजन्] रणे।
सहस्त्रफणवान् शेषः आसीद् विष्णुपदं गतः।
रामेण निहते दैत्यश्रेष्ठे शेषाः प्रदुद्रुवुः॥ ११॥
ततो हृष्टाः सगन्धर्वाः देवाः ह्यर्षिगणास्तदा।
बभूवुस्ते तत्र देवि रामचन्द्रप्रसादतः॥ १२॥
परस्परमवोचन्स्ते देवाः सेन्द्राः मुदान्विताः।
अहो भाग्यमहोधन्याः कृता रामेण वै वयम्॥ १३॥
यदा प्रभृतिः रामोऽसौ ह्यवतीर्णोऽस्ति भूतले।
तदा प्रभृतिः लोकानां क्षेममासीन्निरन्तरम्॥ १४॥
इत्युक्त्वा च तदा रामं प्रणम्य च पुनः पुनः[१] ॥ १५॥
रामचन्द्रोऽपि तान् वीक्ष्य मुमुदे हर्षनिर्भरः।
उवाच कृपयाविष्टो देवानां पुरतस्तदा॥ १६॥
भवतां कृपया मेऽभूद् विजयो नात्रसंशयः।
इति वाक्यं समाकर्ण्य रामचन्द्रस्य धीमतः॥ १७॥
आशिषं ते प्रयुञ्जानास्तदा [स्वर्लोकम्] आययुः।
अथ दैत्येन्द्रनिहते राक्षसाश्च वशानुगाः॥ १८॥
कृता विभीषणेनैवं रणमूर्द्धनि चासुराः।
अगस्तिद [मना] द् भूमिं विशन्तमिव भूधरम्॥ १९॥
विन्ध्याख्यं रामचन्द्रस्य सायकं नि [? सायकेन] हतं रणे।
सहस्त्रकण्ठमुद्वीक्ष्य रामस्य निकटं ययौ॥ २०॥
ब्रह्मादिभिः सुरैः सार्द्धं पुष्पवृष्टिं मुदान्वितः।
ततो ह्यमृतवृष्टिञ्च ववर्ष मघवा तदा॥ २१॥
तद् बभूवोत्थितं सर्वं रामसैन्यं सविस्मयम।
इति ते कथितं सुभ्रु रामस्य चरितं शुभम्॥ २२॥

*इति श्रीशैवे रामायणे पार्वती ईश्वर [पार्वतीश्वरसंवादे] सहस्त्रकण्ठवधो नाम नवमोऽध्यायः।*

---

१, २. अत्र लेखकप्रमादजन्य पाठत्रुटिरिव प्रतीयते।

## दशमोऽध्यायः

ईश्वर उवाच—

रामचन्द्रेण निहतो सर्वराक्षसभूपतिः।
राक्षसा ह्यवशिष्टा ये तदा दीना बभूविरे॥ १॥
शोकेन महताविष्टा जाता समरमूर्द्धनि।
पुष्कराक्षमुवोचन्स्ते [?मवोचन् ते] किंकर्तव्यमतो वद॥ २॥
ततः सहस्त्रतनयो पुष्कराक्षो महाद्युतिः।
विभीषणस्य पुरतो ययौ शोकभयान्वितः॥ ३॥
प्रणम्य पादयोस्तस्य रक्ष रक्षेति चाब्रवीत्।
तच्छ्रुत्वा वचनं तस्य पुष्कराक्षस्य धीमतः॥ ४॥
तदा विभीषणं प्रोचे न भूयात्ते भयं सुत।
अहं ते रामचन्द्रस्य निकटे स्थापयामि वै॥ ५॥
रामचन्द्रस्य कृपापात्रं भव राक्षससत्तम।
इत्युक्त्वा करुणाविष्टो रामचन्द्रकृपां स्मरन्॥ ६॥
सहस्त्रग्रीवतनयं पुष्कराक्षं विभीषणः।
आदाय रामपदयोः पातइ [यि] त्वा वचोऽब्रवीत्॥ ७॥
सहस्त्रग्रीवपुत्रोऽयं विधेयस्तव किङ्करः।
राम राघव राजेन्द्र शरणागतवत्सल॥ ८॥
अभयं देहि चास्मै त्वं दीनानां परिपालकः।
इति विभीषणवचो श्रुत्वा रामः प्रतापवान्॥ ९॥
पतन्तं चरणद्वन्द्वे पुष्कराक्षं महाभुजः।
समालक्ष्य ततो राम उत्तिष्ठेति वचोऽब्रवीत्॥ १०॥
अस्यां पुर्यां चित्रवत्यां पुष्कराक्ष सुखं वस।
कुरु तातस्य संस्कारं भयं मत्तोऽस्ति नो तव॥ ११॥
इत्युक्त्वा भरतं प्राह शरणागतवत्सलः।
एनमादाय गच्छ त्वं पुरीं चित्रवतीं शुभाम्॥ १२॥
सहस्त्रग्रीवसंस्कारं कारइ [यि] त्वा यथाविधि।
पुष्कराक्षं चित्रवत्यामभिषिच्य तदात्मजम्॥ १३॥

तं मन्त्रिवर्गसहितमानयस्व मदन्तिके।
इत्युक्तो भरतः श्रीमान् पुष्कराक्षेण संयुतः॥ १४॥
प्रविश्य राजमार्गेण ददर्श भवनोत्तमम्।
सहस्त्रग्रीवसदनं सुमेरुशिखरोपमम्॥ १५॥
सारिकाकीरसंघुष्टं केकिमालाविराज़ितम्।
नानारत्नसमाकीर्णं कपाटद्वारशोभितम्॥ १६॥
शातकुम्भमयैर्दिव्यैः कलशैः सुमनोहरम्।
मेरुप्राकारसंयुक्तं वातायनशतान्वितम्॥ १७॥
पताकाध्वजसङ्कीर्णं वितानालङ्कृतं महत्।
मुक्तामणिस्वस्तिकैश्च सर्वतोभद्रसंयुतम्॥ १८॥
नानाकुसुमसञ्छन्नं प्रमदापुञ्जरञ्जितम्।
राजमण्डलसन्दीप्तसौधराजिविराजितम् ॥ १९॥
तस्मिन्नन्तःपुरे धीमान् प्रविशन् भरतस्तदा।
दुःखितं स्त्रीजनं सर्वमाश्वास्य कृपया पुनः॥ २०॥
सहस्त्रग्रीवसंस्कारं कारयामास सूनुना।
दशाहानन्तरं कार्यं यत्तत्कर्म समाप्य [च]॥ २१॥
रत्नसिंहासने दिव्ये कृतकौतुकमङ्गले।
संस्थापयन् पुष्कराक्षमभिषिच्य तदात्मजम्॥ २२॥
सर्वतीर्थोदकैस्तत्र सौ [वर्ण] कलश स्थितैः।
[म] न्त्रिवर्गसमायुक्तं छत्रचामरशोभितम्॥ २३॥
पुष्कराक्षं समादाय रामान्तिकमुपाययौ।
अथ रामस्य चरणौ स्पृशन्स सार [? सरसिजे] क्षणः॥ २४॥
आनीय तुरगं प्रीत्या भक्त्या रामाय संददौ।
किङ्करोऽहं तव विभो तदाज्ञापय यन्मतम्॥ २५॥
एवं विनिर्जित्य सहस्त्रकन्धरं सुग्रीवरक्षोनृपसंघयुक्तः।
ब्रह्मादिभिर्देवगणैः सुपूजितस्तदा बभौ तत्र सुखेन रामः॥ २६॥

*इति श्रीशैवरामायणे पार्वतीश्वरसंवादे सहस्त्रग्रीवसुताभिषेको नाम दशमोऽध्यायः।*

## एकादशोऽध्यायः

ईश्वर उवाच—

श्रृणु देवि प्रवक्ष्यामि ब्रह्मा देवर्षिसंयुतः।
उवाच वचनं तत्र रामं राजीवलोचनम्॥ १॥

ब्रह्मोवाच—

त्वमेव परमं ब्रह्म त्वयि सर्वं प्रतिष्ठितम्।
दृश्यसे सर्वभूतेषु ब्राह्मणेषु विशेषतः॥ २॥
दिक्षु सर्वासु गगने पर्वतेषु वनेषु च।
अन्ते पृथिव्याः सलिले वायौ वह्नौ महोदधौ॥ ३॥
अहं ते हृदयं राम जिह्वा देवी सरस्वती।
देवा गात्रेषु रोमाणि महोदेवोप्यऽहंकृतिः॥ ४॥
सप्तर्षयो वसिष्ठाद्याः देवाः साग्निपुरोगमाः।
पशुपक्षिमृगाः कीटाः समुद्राः कुलपर्वताः॥ ५॥
स्थावराः जङ्गमाः ये ये भुवनानि चतुर्दश।
वृक्षौषधिलताः देव गात्रेषु तव निर्मिताः॥ ६॥
कुक्षौ त्वदीये तिष्ठन्ति परमाणव एव ते।
सर्वेषां जन्मनिधनं प्रापकोऽसि न संशयः॥ ७॥
मायाश्रयत्वाज्जीवानां पिता भवसि सुव्रत।
सर्वव्यापी सर्वसाक्षी चिन्मयस्तमसः परः॥ ८॥
निर्विकल्पो निराभासो निशं [ निश्शं ] को निरुपद्रवः।
निर्लेपः सकलाध्यक्षो महापुरुष ईश्वरः॥ ९॥
अहं विष्णुश्च रुद्रश्च शङ्करश्च निरञ्जनः।
त्वत्तो नान्यः परो देवस्त्रिषु लोकेषु विद्यते॥ १०॥
इति स्तुत्वा दैवगणैश्चतुक्त्रोऽब्रवीत्पुनः।
राम त्वं दुष्टनाशाय ह्यवतीर्णो रघोः कुले॥ ११॥
अस्माभिः प्रार्थितः पूर्वं तत्सत्यं कृतवानसि।
याहि राम गृहीत्वाश्वं यज्ञशेषं समापय॥ १२॥

कलास्तवसुरेन्द्रादीन् सन्तर्पय विधानतः।
एकादशसहस्त्राणामब्दानां पालय क्षितिम्॥ १३॥
ततः परं निजं धाम यास्यामि त्वं परात्परम्।
इति विज्ञाप्य देवेशो ययौ देवगणै [ स्-] सहं [ ? सह ]॥ १४॥
अथागमत्पुष्कराक्षो पूजामादाय सुप्रभाम्।
रत्नसिंहासनं प्रादाद् रामायामिततेजसे॥ १५॥
रामस्य चरणद्वन्द्वं रत्नपुष्पैरपूजत्।
पुपूज परया भक्त्या नमस्कृत्वा पुनः पुनः॥ १६॥
रामाज्ञां च गृहीत्वाऽसौ ययौ स्वपुरीं प्रति।
ततो रामस्तदा तत्र प्रोवाच जनसंसदि॥ १७॥
किंकर्तव्यमितोऽस्माभिः यूयं वदत मामकाः।
इत्युक्ते च तदा रामे सुग्रीवः प्राह भूमिपम्॥ १८॥
अत्रेत्य कार्यं सर्वं वै जातं मे भा [ वि ] तत्वतः।
गमनं दृश्यते राजन् मेरौ हि कमलेक्षण॥ १९॥
सुग्रीवस्य वचस्तथ्यं मत्वा रामः प्रतापवान्।
सर्वानाज्ञाप्य गमने [ रामः सैन्य- ] समावृतः॥ २०॥
पुष्पकं तत्समारुह्य देवतागणपूजितः।
आगत्य येन मार्गेण ययौ मार्गेण तेन सः॥ २१॥
सप्तद्वी [ पा ] नतिक्रम्य हेमाद्रिं समुपागमत्।
तत्र देवगणान्नत्वा मेरौ स्थित्वा महाबलः॥ २२॥
मेरुणा दत्तमखिलं यत्नप्राप्तः प्रगृह्य सः॥
भेरीरवैस्तूर्यघोषैर्विदारितदिगन्तरः ॥ २३॥
सर्वैः साकं मुदा रामो भ्रातृभिः सहितः प्रभुः।
मङ्गलालङ्कृतं दिव्यमयोध्यानगरं ययौ॥ २४॥

*इति श्रीशैवरामायणे पार्वतीश्वरसंवादे*
*एकोदशोऽध्यायः।*

## द्वादशोऽध्यायः

ईश्वर उवाच—

अथ रामो रघुपतिर्यजने कृतधीर्मुदा।
सीतया सहितः श्रीमानश्वमेधे महाक्रतौ॥ १॥
कृत्वाथ ऋत्विग्वरणं वसिष्ठादीन्महामुनीन्।
वसिष्ठो वामदेवश्च विश्वामित्रोऽथ गौतमः॥ २॥
जाबालिर्जमदग्निश्च मार्कण्डेयोऽपि मौद्गलः।
कश्यपोऽत्रिर्भरद्वाजः सुतीक्ष्णोऽगस्त्यनारदौ॥ ३॥
रामादयो मुनिश्रेष्ठा रामस्य परमात्मनः।
यथाशास्त्रमनुक्रम्य ह्यश्वमेधे महाक्रतौ॥ ४॥
शालाश्च सरयूतीरे तासु वेदीः प्रकल्प्य च।
सीतया सहितं रामं सदीक्षामुपवेश्य च॥ ५॥
आदौ तु प्रातःसवनं पश्चान्माध्यंदिनं तदा।
तृतीयं सवनं चेति कर्म कुयुर्यथाविधिः॥ ६॥
स्वाहाकारवषट्कारैः ऋग्यजुःसाममन्त्रजैः।
अग्निष्टोमातिरात्रौ च पौण्डरीकमतः परम्॥ ७॥
चयनं गारुडं होमं प्रकृतिविकृतीस्ततः।
कोविदारैस्त्रिभिः षड्भिर्बिल्वौदुम्बरखादिरैः॥ ८॥
वस्त्रालङ्करणोपेता यूपास्तत्रैकविंशतिः।
रात्रावश्वस्य शुश्रूषां कुर्वती जानकी तदा॥ ९॥
न्यवसत् सा ततो देवाः समाहूताः समाययुः।
बबन्धुस्तत्रयूपेषु कुशाद्ये त्रिशतं पशून्॥ १०॥
यूपाग्रे रज्जुभिर्बद्धं मन्त्रपूतं हयं ततः।
छेदयित्वा वसिष्ठस्तद् वपामुधृ [ ? द्ध ] त्य सर्त्विजः॥ ११॥
आश्रावयेति मन्त्रेण हव्यवाहे व्यनिक्षिपत्।
देहं निकृन्तनं कृत्वा ह्यङ्गैर्होममथाकरोत्॥ १२॥
एवं शतत्रयस्यापि पशूनामङ्गहोमकम्।
रामस्य हयमेधे ये द्रष्टुमभ्यागताः जनाः॥ १३॥

ब्राह्मणाः क्षत्रियाः वैश्याः शूद्रास्तत्र सविस्मयाः।
अहोरात्रे ददावन्नमागतेभ्यः सुसत्कृतम्॥ १४॥
अन्नकूटैश्बहुभिः पर्वता इव संस्थितैः।
सूपैर्नानाविधैः शाकैर्हिङ्गूलवणमिश्रितैः॥ १५॥
मारीच्याग्राज्यसम्मिश्रैः रसालफलसंयुतम्।
तिलमाषादिचूर्णाक्तैः रसैर्बहुभिरन्वितम्॥ १६॥
द्राक्षेक्षुरम्भापनसनारिकेलफलैर्युतम् ।
सिद्धार्थरससंयुक्तैश्चूतखण्डैरलङ्कृतम् ॥ १७॥
सौवर्णे राजते रत्ने भाजने पर्णनिर्मिते।
शाल्योदनं विनिक्षिप्य प्राज्यमाज्यपुटेषु॥ १८॥
यथारुचि प्रभुञ्जध्वं भुञ्जध्वमिति चाब्रुवन्।
गृह्यतां गृह्यतामन्नं भूयो भूयो ह्यपेक्षितम्॥ १९॥
इति सर्वेषु तृप्तेषु भक्ष्यैरुच्चावचैरपि।
हयमेधे महायज्ञे राघवः सी [त] या सह॥ २०॥
दीक्षान्तेऽवभृतस्नातो शतकोटीः सुवर्णकाः [गाः]।
आनीय ब्राह्मणेभ्यश्च ऋत्विग्भ्यः प्रददौ नृ [पः]॥ २१॥
अध्वर्यौदा [ ? द्गा ] तृहोतृभ्यो दशकोटिसुवर्णकम्।
बहुमान्य [ान्] तदा भूपान् नानाद्वीपेभ्य आगतान्॥ २२॥
यथार्ह...............[2] [कृ] त्वा..............[3] समन्वितान्।
सुग्रीवराक्षसेन्द्रं च प्रस्थाप्य परिवारकैः॥ २३॥
सी [त] या सह रामोऽपि [सोदरैः स] हितोऽनघः।
[दश] वर्षसह [स्रा] णि ह्ययोध्यां पालयन् पुरीम्॥ २४॥
चक्रे रामोऽश्वमेधानामेकोन [शत] मेव सः।
अ [न्तिमे] जानकीं हित्वा वाल्मीकेराश्रमं प्रति॥ २५॥
सीताप्रतिनिधिं कृत्वा सुवर्णप्रतिमां तदा।
अश्व [मेधङ] चकारासौ भ्रातृभिः सहितः शुचिः॥ २६॥
पश्चाद् वर्षसहस्रञ्च पालयन् पृथिवीमिमाम्।
अयोध्यायां विनिक्षिप्य पुत्रो कुशलवाविह॥ २७॥

---

२. पाठः कीटभक्षितोऽस्ति। 'यथार्हमर्हणं कृत्वा......' इति प्रतीयते।

३. पाठः कीटभक्षितः।

सोदरैः सहितो रामः साकेते पुरवासिभिः।
तृणपाषाणवृक्षाद्यैः स्नात्त्वैव सरयूजले॥ २८॥
निजनामयशो भूमौ स्थापयित्वा दिवं ययौ।
रामस्य पुरतः सीता प्रविवेश धरातलम्॥ २९॥
पुनर्वैकुण्ठमासाद्य चिक्रीडे रमया सह।
वैदेहीरूपया रामो विष्णुरूपेण सर्वदा॥ ३०॥

ईश्वर उवाच—

श्रीरामविजयं नाम पवित्रं पापनाशनम्।
रामस्य चरितं पुण्यं सहस्त्रग्रीवमर्दनम्॥ ३१॥
ये शृण्वन्ति सदा भक्त्या ये लिखन्ति मनीषिणः।
ये वाचयन्ति सततं मुच्यन्ते सर्वपातकात्॥ ३२॥
एतन्मया निगदितं तुभ्यं पर्वतनन्दिनि।
शैवमेनं वदिष्यन्ति अद्य प्रभृतिः मा [गधाः]॥ ३३॥

*इति श्रीशैवरामायणे पार्वतीश्वरसंवादे सहस्त्रग्रीवरामचरिते द्वादशोऽध्यायः।*

पुष्पिका—१२ संमत् १९५६ फालगून शुद्ध चतुर्दश्यां लिखितम्।

